कादिभ्यां[1,2] दंशयति[3]। १६। निश्यत्र मा पाप्मन्निति[4] तितउनि पूल्यान्यवसिच्यापविध्य। १७। अपरेद्युः सहस्राक्षायास्सु वलींस्त्रीन्पुरोडाशसंवर्तांश्चतुष्पथे[5] ऽवक्षिप्यावकिरति[6]। १८। ॥ ६ ॥ ॥ ३० ॥

यस्ते मद इति[7] शमीलूनपापलक्षणयोः[8] शमीशम्याकेनाभ्युद्य[9] वापयति[10]। १। अधिशिरः[11]। २। अन्तर्दाव इति[12] समन्तमग्नेः कर्ष्वांसुष्णपूर्णायां[13] जपंस्त्रिः[14] परिक्रम्य पुरोडाशं जुहोति[15]। ३। प्राग्नये[16] प्रेत[17] इत्युपदधीत[18]। ४।

---

[1] K Bü Bi Bh °रत्निकां°. — [2] D (text) मशकोदिग्भ्यां. — [3] D (schol.) किंस्त्यः शंखः श्वजांवीलः शुनः श्लेष्म। उदकरक्षिका जलूकादि· गृहकोलिका। किस्त्येनालेपनं। श्वजाम्बीलेन वा यवा(?) शंखेनालेपनं। तदा जलूकाया दंशनं। यदा श्वजाम्बीलेन तदा गृहकोलिकयालेपने (!) मंत्राः। दंशने च समाननिर्देशात्। किंस्त्यादीनि चेति बहुवचनं तद्वदप्रयोगात्। सर्वत्रायोजनामिति (! for °जनानामिति?) यथा. In the introduction Dārila has the following: किंस्त्येनाभिलिप्य उदकरक्षकाया दंशनं ख· लालयालेपनं (? शलब्या°?) मशकादिभ्यां दंशनं. Is the sūtra to be compared, as far as construction is concerned, with Kāuç. 27. 29? — [4] vi. 26. 1; cf. the तक्मनाशनगण Kāuç. 26. 1, note. This pratīka occurs also in the पाप्मगण, Ath. Pariç 34. 6: वि देवा जरसावृतनप (MSS. °वृतमप) नः शोशुचदघमव मा पाप्मन्निति पाप्महा। इति पाप्मगणः. The pratīkas are: iii. 31. 1; iv. 33. 1; vi. 26. 1. — [5] Bh वलीस्त्री°; Ch वलीभंस्त्री° (for वलीकांस्त्री°?); D (text) वलींस्त्री°. — [6] So with doubtful emendation; all MSS. च क्षिप्य. — [7] vi. 30. 2. — [8] D (schol.) शम्या लूनाः केशा यस्य स शमीलूनः। पापं लक्षणं यस्य स पापलक्षणः... अनयोर्भिषज्यप्रायश्चित्ते. — [9] All MSS. शमीशमकेना°; D (schol.) शमी च शम्याका च शमीशमके (!) इति द्वंद्वं ... तेनोदकमिश्रेण शिरो दर्भपिंजूलीभिर्वल्लीकैः सार्द्धमधिशिरो ऽवसिंचति (Kāuç. 25. 37) ... केशच्छेदने मंत्रः — [10] Ch °नाभ्युद्वापयति. — [11] D (schol.) दर्भपिंजूलीभिः सार्द्धमधिशिरो ऽवसिंचति. — [12] vi. 32. 1. — [13] K फरिष्वाग; D (text) कृष्णाम्; D (schol.) अग्नेः सर्वतो गर्तं खात्वा. — [14] Ch त्रिःष्प°; the rest त्रिष्प°. — [15] D (schol.) पिशाचनाशनं. — [16] vi. 34. 1. — [17] D (schol.) प्रेतो यन्तीति (! for यन्त्विति); vii. 114. 2. — [18] D (schol.) रक्षचातनं. —

वैश्वानरीयाभ्यां पायनानि[1] । ५ । अस्याद् द्यौरित्यपवातायाः[2,3] स्वयंस्रस्तेन गोशृङ्गेण संपातवता जपन्[4] । ६ । यां ते रुद्र इति[5] शूलिने शूलम्[6] । ७ । उत्सूर्य इति[7] शमीविम्बशीर्णपर्णावधि[8,9] । ८ । द्यौश्च म[10] इत्यभ्यज्यावमार्ष्टि[11] । ९ । स्थूणायां निकर्षति[12] । १० । इदमिद्वा[13] इत्यक्षतं मूत्रफेनेनाभ्युद्य[14] । ११ । प्रक्षिपति[15] । १२ । प्रक्षालयति । १३ । दन्तरजसावदेग्धि[16] । १४ । स्तम्बरजसा[17] । १५ । अपचित[18] आ सुस्रस इति[19] किंस्त्यादीनि[20] । १६ । लोहितलवणं संक्षुद्याभिनिष्ठीवति[21] । १७ । अन्तरिक्षेणेति[22]

---

[1] D (schol.) वैश्वानरो न ऊतय इत्येताभ्यां (vi. 35; 36) कर्माणि कर्तव्यानि भैषज्येषु पायनानि विहितानि सर्वभैषज्यानि चैतानि. — [2] vi. 44.1 (vii. 77.1?). — [3] K Bi °वातायाः; Ch अयावानायाः; Bū E P as above; D (text) अपगतायाः; D (schol.) अपगता गौः वत्सविगलितस्नेहा. — [4] This word is wanting in D (text); E joins it to the next sūtra; D (schol.) स्वयंपतितेन गोशृंगेण संपातसंस्कृतेनाचमयति । अलाबुनाचामयतीति (Kāuç. 29. 13.) । यथा विभक्तिसामान्यात् । गोशृङ्गेण श्चोतयतीति केचित् । ओषध्याभिश्चोतयते (Kāuç. 30. 1) । . . . तत्रकायांजलिं कृत्वा जपन्नाचामयतीति (Kāuç. 28. 1) एकदेशग्रहणात्. — [5] vi. 90. 1. — [6] D (schol.) शूलमायुधविशेषः । क्रमभेदेन कर्मविधानं जपतः संबोधनं यथा स्यात् । शूलमत्यास्तीति (! for शूलमस्यास्तीति?) तस्मै शूलं बध्नाति. — [7] vi. 52. 1. — [8] All MSS. except D °बिम्बं. — [9] Thus emended; MSS. शीर्ष°; K P Bi Bh °पर्णाव°; D (schol.) शमीफलगुरोलकः शीर्षपर्णिका शरीषि (! for शिरीषः?) करोति प्रसिद्धा । आभ्यामभिश्चोतते । ओषध्याभिश्चोतयति (cf. Kāuç. 30. 1) । इति निर्देशसामान्यार्थत्वात् । पिशाचनाशनं. — [10] vi. 53. 1. — [11] D (schol.) व्याधितं. — [12] D (schol.) अथवा स्थूणया (!) निकर्षति विरिष्टं घृतेनाभ्यक्तं. — [13] vi. 57. 1. — [14] D (schol.) मानुषमूत्रफेनेन अरुंडं (! for अरुः?) क्लेदयति. — [15] D (schol.) ततो मूत्रं प्रक्षिपति पाणिना. — [16] D (schol.) दंतमलिनालिंपत्यघ्नंतं. — [17] D (schol.) गरीस्तंबलग्नो (!) रजः पांसुरित्यर्थः. — [18] D omits this word; E has a colon after it. — [19] vi. 83. 1; vii. 76. 1. — [20] This division is according to E; D does not divide here; cf. Kāuç. 30. 16. — [21] D (schol.) सैन्धवलवणं चूर्णीकृत्यापचितिं कृत्वा तमभिमुखे निष्ठीवेत्. — [22] vi. 80. 1. —

पक्षहतं मन्त्रोक्तं चङ्क्रमया[1]। १८। कीटेन धूपयति[2]। १९। ग्लौरित्यक्षतेन[3]। २०। व्रीहिं[4] स्वामित्यज्ञातारुः शान्युदकेन संप्रोक्ष्य[5] मनसा संपातवता[6]। २१। या ओषधय इति[7] मन्त्रोक्तस्यौषधीभिर्धूपयति[8]। २२। मधूदश्वित्पाययति। २३। क्षीरोदश्वित्[9]। २४। उभयं च। २५। देवा अदुरिति[10] वल्मीकेन बन्धनपायनाचमनप्रदेहनमुष्णेन[11]। २६। यथा मनो ऽव दिव[12] इत्यरिष्टेन[13]। २७। देवी देव्यां यां जमदग्निरिति[14] मन्त्रोक्ताफलं[15] जीव्यलाकाभ्याममावास्यायां[16] कृष्णवसनः कृष्णभक्षः पुरा काकसंपातादवनक्षत्रे ऽवसिञ्चति। २८। ॥ ७ ॥ ३१ ॥

---

[1] D(schol.) गमनं चंक्रमः(!)...कर्मोक्तं मूत्रफेनेनाभ्युद्येति सर्वकर्मणातिदेशः पक्षहतभैषज्यं. — [2] This sūtra is wanting in D (text and schol.). — [3] vi. 83. 3[c]; this sūtra is wanting in D (text and schol.); cf. sū. 11. — [4] vi. 83. 4. — [5] D (text) प्रक्षाल्य; D (schol.) अज्ञातकरणमज्ञातारुः तं ... प्रक्षालयति. — [6] D (schol.) तत्र आज्यं हुत्वा। मनसा संकल्पयति। संपातो न (?) मया कृता इति चिंतयति. — [7] vi. 96. 1. — [8] Ch Bi ओषधि°; D (schol.) मंत्रे तु सोम उक्तः तस्य वीरिण्य ओषध्यस्ताभिर्धूपयति। पापगृहीतं. — [9] K Ch E D (text and schol.) वीरोद°. — [10] vi. 100. 1. — [11] E D (text) प्रदेहम; Bi प्रदेशहनम्; D (schol.) to the entire sūtra: वल्मीकेन साधयति। बंधनादीनि। वल्मीकं बध्नाति। वल्मीकं पाययति वल्मीकमाचमयति वल्मीकं चोष्णं कृत्वा प्रलिंपति। विषदूषणा. — [12] vi. 105. 1; vii. 107. 1. — [13] D (schol.) अस्य कर्मारिष्टगृहीतेनोक्तं वेदितव्यं। सूतिकारिष्टको प्रपादयतीति कासभैषज्यं; cf. Kāuç. 28. 15. — [14] vi. 136. 1; 137. 1; D (schol.) तत्स्थैर्यवृद्धिव्यार्थं (?) पूर्वं वृद्धिदृंहणार्थमुत्तरसूक्तस्य विकल्पः. — [15] Ch पूलं. — [16] D (schol.) मंत्रोक्ता काचमाची (Cod. माच°) तस्याः फलं जीव्या सह जीवि (! for जीविका, with haplography?) काचमाची आलाका भृंगकः (for भृंगराजकः?) अनयोरन्यतरया सह मंत्रोक्तफलमवसिंचति (Weber's hesitating emendation to पूलंजी वल्मीकाभ्याम् [Ind. Stud. v. 379 note] is thus rendered unnecessary)।... केशदोषभैषज्यं. —

यस्ते स्तन इति[1] जम्भगृहीताय स्तनं प्रयच्छति[2]। १। प्रियङ्गुतण्डुलानभ्यवदुग्धान्पाययति।२। अग्नाविष्णू सोमारुद्रा सिनीवालि वि ते मुञ्चामि शुम्भनी इति[3] मौञ्जैः पर्वसु बद्ध्वा पिञ्जूलीभिराप्लावयति[4]। ३। अवसिञ्चति[5]।४। तिरश्चिराजेरिति[6] मन्त्रोक्तम्[7]। ५। आकृतिलोष्टवल्मीकौ परिलिख्य[8]। ६। पायनानि[9]। ७। अपचितामिति[10] वैणवेन दार्भ्यूषेण[11] कृष्णोर्णाज्येन[12] कालवुन्दै स्तुकाग्रैरिति मन्त्रोक्तम्[13]।८। चतुर्थ्याभिनिधायाभिविध्यति[14]।९। ज्यास्तुकाज्वालेन[15]। १०। यः कीकसा इति[16] शीलवीणातन्त्रीं बध्नाति[17]।११। तन्त्या क्षितिकां[18]। १२। वीरिणवध्रौ[19] स्वयंस्रानं त्रिः समस्य[20]। १३। अप्सु त इति[21] वहन्त्यामध्ये

---

1 vii. 10. 1. — 2 D (schol.) जंभो रक्षः। तेन गृहीतः तस्मै मातुः स्तनं प्रयच्छति. — 3 vii. 29. 1; 42. 1; 46. 1; 78. 1; 112. 1. — 4 D (schol.) जंभगृहीतं. — 5 D (schol.) अथवा अवसिंचति. — 6 vii. 56. 1. — 7 D (schol.) तत्पाययति . . . मधुकं मधूद्वापनिर्देशसामान्यात्; cf. Kāuç. 29. 10. — 8 D (schol.) जीवकोपण्यामुत्सीव्य बध्नाति। अयं(!) क्रिया निर्देशसामान्यात्; cf. Kāuç. 26. 43. — 9 D (schol.) अष्टाणां (? Cod. °यां) यानि विषदूषणेषु पायनानि भवंतीह हरिद्रां सर्पिषि पाययत्येतानि पायनानि; cf. Kāuç. 28. 4. — 10 vii. 74. 1. — 11 Ch E D (text) दार्भ्युषेण; D (schol.) धनुपदार्भ्युपण (! for धनुषा दार्भ्युपेण?) दर्भविकारा दर्भिरज्जुः। तया भूप(?) तस्य तदार्भ्युष्यं (!)। दार्भ्युष्यमित्यर्थः; cf. Kāuç. 35. 28. — 12 D (schol.) कृष्णोर्णा ज्या यस्य तस्य तत्. — 13 D (schol.) तेन धनुषा कालवेंदुदा इषवः तैः कृष्णवर्णैः स्तुकाग्रैः। ऊर्णास्तुकाग्रे स्तुका जटोच्यते तैर्मंत्रोक्तं विध्यति। अपचितमित्यर्थः. — 14 vii. 74. 4. — 15 D (schol.) ज्यया स्तुकयावज्वालः। . . . तेनावसिंचति . . . अपचितं; cf. Kāuç. 27. 29, 33. — 16 vii. 76. 3. — 17 D (schol.) अचतभेषज्यं. — 18 Ch E चितिकान्; the rest चितिकां; D (schol.) तस्या (Cod. तरस्या) वीणायाः चितिकांतयैव तंत्र्या बध्नाति चितिकारभस्योपरि तृणडंख- (! for °खंड-?) रोह्यादनार्थः(?). — 19 Ch वध्रो; E वंध्री; D (text) वधं; D (schol.) व्रधः. — 20 D (schol.) बध्नाति अचतभेषज्यं. — 21 vii. 83. 1. —

विमिते पिञ्जूलीभिराप्लावयति[1] ।१४। अवसिञ्चति[2]।१५। उष्णाः संपातवतीरसंपाताः[3] । १६ । नमो रूरायेति[4] शकुनीनिवेषीकाञ्जिमराडूकं नीललोहिताभ्यां सूत्राभ्यां सकक्षं बद्ध्वा[5] । १७ । शीर्षक्तिमित्यभिमृशति[6] । १८ । उत्तमाभ्यामादित्यमुपतिष्ठते[7] । १९ । इन्द्रस्य प्रथम इति तक्षकायेत्युक्तम्[8] । २० । पैद्वं[9] प्रकर्ष्य[10] दक्षिणेनाङ्गुष्ठेन दक्षिणस्यां नस्तः।२१। अहिभये सिच्यवगूहयति[11]।२२। अङ्गादङ्गादित्या प्रपदात्[12] । २३ । दंश्मोत्तमया[13, 14] नितापाहिमभिनिरस्यति[15] । २४ । यतो दष्टः[16] । २५ । ओषधिवनस्-

[1] D (schol.) वहंत्योर्नद्योर्मध्ये गृहं कृत्वा संपातिताभिरद्भिराप्लावयति वरुणगृहीतं. — [2] D (schol.) अथवावसिंचति. — [3] D (schol.) यासामपां संपातास्ता उष्णाः कर्तव्याः । असंपाता इतराः यासां संपातास्ता सीतास्ताभिरद्भिरवसेचनं। सीताभिरसंपातत्वात्. — [4] vii. 116. 1; cf. the तक्मनाशनगण. Kāuç. 26. 1, note. — [5] D (schol.) शकुनीनिव (Cod. शकुनी) करोति। मंत्रोक्तमधस्तल्पे हरितसूत्रेण सव्यजंघासु बद्ध्वादिवत्। . . . इषीकेव रेखा यस्य स इषीकांजिः। तान्नीलसूत्रेण (Cod. तान्नील°) लोहितेन च सूत्रेण सह कक्षाभ्यां बध्वा शकुनीनिव करोति। ज्वरभैषज्यं; cf. Kāuç. 40. 4; 48. 39. — [6] ix. 8. 1. — [7] D (schol.) अस्य सूक्तस्योत्तमाभ्यामृग्भ्यामादित्यमुपतिष्ठते। पादाभ्यां त इत्याभ्यां व्याध्यपरमे (for व्याध्युपरमे?) मन्त्राः (ix. 8. 21, 22). — [8] x. 4. 1; D (schol.) इंद्रस्य प्रथम ब्रह्मणो जज्ञ इति (iv. 6. 1) तक्षकायांजलिं कृत्वा जपन्नित्यादीनि (Kāuç. 28. 1; 29. 1). — [9] D (text) पैद्वस्य. — [10] E प्रकर्प; Bi प्रकर्ष्यं; Bi प्रघृष्टा; D (schol.) पैद्वं कंजपाया अधः कच्छपाकारः (?) अहिदष्टस्य (Cod. अहिर्द°) प्रकर्ष्य दक्षिणे नासापुटे (Cod. नाशा°) च्योतयते। दक्षिणहस्तांगुष्ठेन प्रकर्ष्य नस्य (!) दद्यात् (cf. Kāuç. 35. 4). Is प्रकर्ष्य to be emended to प्रघृष्य? cf. Kāuç. 29. 6. — [11] D (schol.) सर्पभये (?Cod. सर्पाहये) पैद्वं वस्त्रे बध्वा स्थापयति। तस्मिन् वेश्मनि. — [12] x. 4. 25; D (schol.) सर्पदष्टस्या (Cod. °दष्टया) प्रपदाभ्यां प्रकर्षेण मार्ष्टि. — [13] D (text and schol.) दंस्म. — [14] D (schol.) आरे अभूदित्यनया (x. 4. 26). — [15] D (schol.) दंस्म उल्मुकेन (Cod. उलू°) ...अहिमभिमुखं क्षिपति उल्मुकं (Cod. उलूकं)। आरे अभूदित्यनया निरसनं (x. 4. 26); cf. Kāuç. 29. 6. — [16] K (prim. man.) Ch (prim. man.) दृष्टः; D (schol.) सर्पदंशनो (Cod. °दशनो) यत उद्देशे (Cod. उदेशे) दष्टस्तमभिनिरस्यति उल्मुकं; cf. Kāuç. 29. 7. —

तीनामनूक्तान्यप्रतिषिद्धानि भैषज्यानाम्[1] । २६ । अंहोलिङ्गाभिः[2] । २७ । पूर्वस्य[3] पुत्रकामावतोकयोरुदकान्ते शान्ता अधिशिरो ऽवसिञ्चति[4] । २८ । आव्रजितायै[5] पुरोडाशप्रमन्दालंकारान्संपातवतः प्रयछति।२९। ॥८॥ ॥३२॥

वषट् ते पूषन्निति[6] चतुर उदपात्रे संपातानानीय[7] चतुरो मुञ्जान्मूर्ध्नि विबृहति[8] प्राचः[9] । १ । प्रतीचीरिषीकाः[10] । २ ।

---

[1] D (schol.) ओषधीनां वनस्पतीनां च वैद्यके पतिषिद्धानि (! for ऽप्रति°?) व्याधिनिदानं (! for °दान°?) संबंधकानि भैषज्यमंत्रैरनूक्तानां (Cod. °नुक्तानां) तद्विहित (Cod. °हीत) एव नियोगो ऽप्रतिषिद्धवचनात् (Cod. प्रतिषिद्ध°) । तस्माद्यथार्थं पानानुलेपनस्नानधूपभोजनानि । सामर्थ्यपिद्धत्वात् । उपभोगस्य भैषज्या संज्ञा भैषज्यकर्मत्वात् । ... — [2] D (schol.) अनूक्तान्यप्रतिषिद्धानीति (Cod. अनु°) प्रकृतत्वात् । पूर्वसूत्रेणैवेदं प्रसिद्धं । ... अंहस इत्येवं लिङ्गात् । ताभिः समस्ताभिरायुर्वेदपठितानि द्रव्याणां (! for °णि?) व्याधिहेतुविनाशकानि तद्विहितकर्मस्वेव विनियोज्यानि सर्वभैषज्यानि । ... भैषज्यसंहितायास्तु विधिरुक्तः । ... स्त्रीकर्मसंहितायास्तु कथ्यते. The gaṇamālā (Ath. Pariç. 34. 31) gives the following as the अंहोलिङ्गगणः । य आशानामाशापाला अग्नेर्मन्व इति सप्त सूक्तानि या (Cod. इती सप्त सूक्तान्या!) ओषधयः सोमरज्ञीर्वैश्वानरो न आगमञ्छुम्भनी द्यावापृथिवी यदर्वाचीनमग्निं (Cod. °चीमग्निं) ब्रूमो वनस्पतीनिति मुञ्चन्तु मा भवाशर्वौ या देवीर्यन्मातली (Cod. भवाशर्वायदवोर्यमालती!) रथक्रीतमित्येताश्चतस्रो वर्जयित्वा अंहोलिङ्गगणः ॥ ३२ ॥ This gaṇa is wanting in Chambers 365 (Weber's Verzeichniss der Sanskrit-Handschriften in Berlin p. 91); it is found in Bühler's codex (MSS. orient. fol. 973 of the same library) and counts as the 23d gaṇa in the Atharva-Sarvānukramaṇī. The pratīkas are: i. 31. 2; iv. 23–29 (अग्नेर्मन्व इति सप्त सूक्तानि); vi. 96. 2; 35. 2; vii. 112. 1 (xiv. 2. 45); x. 5. 22; xi. 6 (omitting verses 7, 9, 22, and 23). — [3] D (schol.) पूर्वं त्रिषप्तीयम् (i. 1.). — [4] D (schol.) पुत्रकामाया मृतापत्यायाश्च ... शांता ओषधीरुपरि शिरसो ऽवसिंचति. — [5] D (schol.) गृहाणि प्रत्यागतायै. — [6] i. 11. 1. — [7] D (schol.) पश्चादुदपात्रोपसादनं । प्रथमाः प्रत्यृचं उत्तमास्तिसृभिः । समानोदकत्वात्. — [8] Ch Bū D (text and schol.) °वृहति. — [9] K P Bh प्रातः; so also Ch on the margin; D (schol.) सूक्तेनाभिमंत्र्य चतुरो मुंजान् गर्भिण्याः शिरसि उच्छ्रितान् (Cod. उच्छ्रि°) करोति प्रागग्रान् (Cod. °ग्रात्). — [10] D (schol.) प्रत्यगग्राः. —

छिद्यमानासु[1] संशयः[2] । ३ । उष्णेनाप्लावयति दक्षिणात्केशस्तुकात्[3, 4] । ४ । शालान्ग्रन्थीन्विचृतति[5, 6] । ५ । उभयतः पाशं योक्त्रमावध्नाति[7] । ६ । यदि सोमस्यासि राज्ञः सोमात्त्वा राज्ञो ऽधिक्रीणामि यदि वरुणस्यासि राज्ञो वरुणात्त्वा[8] राज्ञो[9] ऽधिक्रीणामीत्येकविंशत्या[10] यवैः स्रजं[11] परिकिरति । ७ ।

अन्या वो अन्यामवत्वन्यान्यस्या उपावत[12]
सध्रीचीः सव्रता भूत्वास्या[13] अवत[14] वीर्यमिति

संनयति[15] । ८ ।

मा ते रिषन्खनिता यस्मै च त्वा खनामसि ।
द्विपाच्चतुष्पादस्माकं मा रिषद्देव्योषधे[16, 17] ॥

स्रजो नामासि प्रजापतिष्ट्वामखनदात्मने[18] शल्यस्रंसनम् ।

---

[1] D (text) विद्यमानासु. — [2] D (schol.) दृषोकासु विभज्यमानासु मरणसंशयः. — [3] P D (schol.) दचिणान्. — [4] D (text) °स्तुकान्; D (schol.) दचिणान् (!) केशसुंजाद्दारभ्य गर्भस्रंसनफलं. — [5] Bü छालाद्; E D (text) छालात्; D (schol.) सूतिकागृहवंधा छिनत्ति सूक्तांते. — [6] D (text) विवृहति. — [7] D (schol.) शकटयोक्त्रमुभयतः प्रवध्नाति न संपातः । उपसृष्टत्वान्नभिण्याः गर्भस्रंसनानि. — [8] Ch वरुणाचा; E वरुणाय. — [9] Ch E राज्ञे. — [10] Cf. Gobh. Gr. ii. 6. 6, and Āpastamba in Sāyaṇa's comment on RV. x. 145 (Müller's edition p. 225). — [11] K Bh D (text) स्रजन्प°; E Bü सृजं; Ch व्रजं; D (schol.) स्रकुल्वारालिकेति (?) प्रसिद्दा । तामटव्यां (Cod. नामाट°) जातामेकविंशतिपरिमितैर्यवैः सर्वतः किरति. — [12] K Ch E P D उपावतः. These two pādas occur RV. x. 97. 14[ab]; TS. iv. 2. 6. 3; VS. xii. 88[ab]. — [13] So Ch Bü; K P Bi E D भूत्वा अस्या. — [14] So Bü D; the rest °स्याव°; K P Ch Bh °वट. — [15] D (schol.) एकीकरणं सन्नयनं (Cod. °न) विसृताया (!) संहरणमित्यर्थः. — [16] K Bü Ch Bi D मार्षद्दे°; cf. Pañcav. Br. xii. 5. 23. — [17] Cf. RV. x. 97. 20; TS. iv. 2. 6. 5; VS. xii. 95. — [18] K Bü Ch Bh D °ष्ट्वम°. —

तां त्वा वयं खनामस्यमुष्मै त्वा शल्यस्रंसनमित्यस्तमिते[1] छत्त्रेण चान्तर्धाय[2] फालेन खनति[3]। ९। अत्र तव राध्यतामित्यग्रमवदधाति।१०। इह ममेति मूलमुपयच्छति[4]।११। एकसरे[5] ऽनुपलीढे[6] कुमारः। १२। दर्भेण परिवेष्ट्य[7] केशेषूपचृतति। १३। एवं ह विवृहशाकवृषे[8, 9, 10]। १४। अवपन्ने[11] जरायुण्युपोद्धरन्ति। १५। स्रजेनौषधिखननं व्याख्यातम्[12]।१६। चत्वार्युमाफलानि पाणावद्भिः[13] श्वोतयते। १७। संवर्तमानेषु[14] कुमारः। १८। ब्राह्मणायनोऽङ्गान्यभिमृशति[15]।१९। पुंनामधेये[16] कुमारः।२०॥९॥ ॥३३॥

इदं जनास[17] इत्यस्यै शिंशपाशाखासूदकान्ते शान्ता

[1] D (schol.) to the mantras in this sūtra आभ्यामृग्भ्याम्. — [2] Ch
BüBi वा°. — [3] Ch खनयति. — [4] D (schol.) अनेन स्रजमूलं गृह्णाति. —
[5] Ch एकपडे; Bü एकसेर. — [6] So E P B; K नुफलीठे; Ch Bh नुप-
लीठे; Bü D (text) नुपलीटे; there is no avagraha in the MSS.; D
(schol.) glosses एकतन्तुभिमूले(!) स्रजं अनुपलीट अच्छिन्न इत्यर्थः। गर्भि-
णोदरे(!) दारक इति ज्ञेयं. — [7] D (schol.) स्रजामूलं(!). — [8] Ch विवृह;
Bü विवृहत्सा°. — [9] All MSS. except D (text and schol.) °साक°. —
[10] So (वृषे) Bü Bi; Ch E P Bh D (text) °मृपे; D (schol.) अनेन वि-
धिना त्रिवमूलं(!) खनेत्। शाकमृपा वासकः (cf. Pet. Lex. sub वृष 1.k.)
। मृपा रिङ्गणिका काक(जंघासु)· जंघेति केचित्। गर्भस्तनं एव मूलवि-
कल्पः. — [11] E Bh जपन्ने; D (text) अवसन् जपंते; D (schol.) जरायु-
णवपतिते विपंनय (! for °पन्नयं?) मूलं केशेभ्यः. — [12] D (schol.)
अनेन स्रजः खननविधानात्। ओपधिमूलानां खननविधिः कथितः। प्र-
त्येतव्यः। यत्र मूलग्रहणं ... तत्र एतत्खननं प्रत्येतव्यं। पाटान्मूलमित्या-
द्युदाहरणं (!cf. Kāuç. 38. 18.). — [13] MSS. °द्भि; D (schol.) ऊमा
व्रतसीतस्याश्चत्वारि (?) फलानि जीवानि गर्भिण्या हस्ते कृत्वा ... —
[14] D (schol.) संवर्तमान(!) युंजीभवति. — [15] D (schol.) जीवत्पितृकः जी-
वत्स्थविरभ्रातृको अन्यस्मिन् वा स्थविरतरे जीवति स ब्राह्मणायनः
(Cod. °नमः) सूक्ताभिमंत्रितो गर्भिण्या अंगानि स्पृशति. — [16] Ch °ध्येये;
D (schol.) स यदि पुंनामानं पादं पाणिं वा ... हनू (Cod. °नौ) वा
बाहुकर्णौ वा स्पृशेत्। गतकुमार इति विज्ञेयं। अनयोश्च विज्ञानमयोः
(! for °मययोः?) प्रसवकाले एव प्रयोगः. — [17] i. 32. 1. —

अधिशिरो ऽवसिञ्चति[1] । १ । आव्रजितायै[2] । २ । निस्सालामित्यवतोकायै[3] कृष्णवसनायै त्रिषु विमितेषु प्राग्द्वारप्रत्यग्द्वारेष्वप्सु[4,5] संपातानानयति । ३ । पलाशे सीसेषूत्तरान्[6] । ४ । सीसान्यधिष्ठाप्याप्लावयति । ५ । निधाय कृष्णं व्रजति[7] । ६ । आदीप्य ब्रह्मा[8] । ७ । एवं पूर्वयोः[9] पृथक्संभार्ये[10] । ८ । शाखासूक्तम्[11] । ९ । पश्चादग्नेरभितः काण्डे[12] इषीके निधायाध्यधि[13] धायिने[14] औदुम्बरीराधापयति[15] । १० । उत्तमाव्रजितायै[16] । ११ । पतिवेदनानि[17] । १२ ।

---

[1] D (schol.) वंध्याया इदं कर्म । प्रसवाय (Cod. °या) शिंशपां शाखां आनीयोदकसमीपे . . . तासु वंध्यामुपवेश्य तस्याः शिरसि ओषधीः कृत्वा . . . अवसिंचति. — [2] D (schol.) आह आव्रजिताया इत्यवयवग्रहणात् पुरोडाशप्रमंदालंकारान् । संपातवतः प्रयच्छतीति भवति; cf. Kāuç. 32. 29. — [3] ii. 14. 1. — [4] K Ch °द्वारः; D (schol.) प्राक्द्वाः; cf. Kāuç. 24. 3. — [5] D (schol.) प्रत्यङ्द्वारेष्व°. — [6] E शीशेषू; D (schol.) पलाशे तत्र सीसानि कृत्वोत्तरसंपातानानयति. — [7] D (schol.) तस्मिन्नाप्लवनगृहे यत्परिहितं कृष्णं वस्त्रं तन्मुंचति ततो ऽन्यं (प)रिधाय पूर्वेण द्वारेण निःक्रामति. — [8] D (schol.) तद्गृहमादीप्याग्निना तेनैव पूर्वद्वारेण निः क्रामयति. — [9] Bi has a colon here. — [10] D (schol.) यथा पश्चिमे कर्म कृतमेवं पूर्वयोर्गृहयोः कर्मणी स्याता...। पृथक् संभार्यति (! for °ते or °भारयति?). — [11] D (schol.) अस्य सूक्तस्य शिंशपाशाखासूदकांत इत्येतत्कर्म भवति; cf. sūtra 1. — [12] Ch काष्ठे; D (text) काष्टे; Bü काण्डे. — [13] Bü °ध्यति. — [14] E धायिते; D (text) धोयिने; the rest, as above (dual?). — [15] D (text) °रोपाययति; D (schol.) समिदाधानाग्नेः (Cod. °ग्नेः) पश्चादग्नेः त्सदशिरेणैषीकनीहत्वा (?) तोरणाकारेधाग्नेः (??) धारयति । तोरणं तस्योपरि प्रपरि (! for उपरि?) समीपेन औदुम्बरीः समिध आधापयति । कर्तृमंत्रं अवधान्यवतोका अभित उभयतो निखनेत् । अभित इति ग्रहणं मूलसंयोगात. — [16] D (schol.) पुरोडाशप्रमंदालंकारान्संपातवतः प्रयच्छतीत्येतदन्नं भवति; cf. Kāuç. 32. 29; 34. 2. — [17] D (schol.) वच्याम इति वाक्यशेषः (Cod. °विशेषः) । पतिलाभफलानि कर्माणि . . .; cf. Kāuç. 74. 7, and the Paddhati ibid. —

आ नो अग्न[1] इत्यागमकृशरमाशयति[2] । १३ । मृगाखरादेद्यां मन्त्रोक्तानि संपातवन्ति द्वारे प्रयच्छति[3] । १४ । उदकंसे व्रीहियवौ जाम्यै[4] निशि हुत्वा दक्षिणेन प्रक्रामति[5] । १५ । पश्चादग्नेः प्रक्षाल्य संधाव्य संपातवतीं[6] भगस्य नावमिति[7] मन्त्रोक्तम्[8] । १६ । सप्तदाम्न्यां सपातवत्यां वत्सान्प्रत्यन्तान्प्रचृतन्तो[9] वहन्ति । १७ । अहतेन संपातवता[10] ऋषभमभ्यस्यति[11] । १८ । उदर्दयति[12] यां दिशम् । १९ । जाम्यै[13] प्र यदेत[14] इत्यागमकृशरम्[15] । २० । इमा ब्रह्मेति[16] स्वस्रे[17] । २१ । अयमा यातीति[18] पुरा काकसंपातादर्यम्णे[19]

---

[1] ii. 36. 1. — [2] So (with श) all MSS.; D (schol.) कृशर ओदनः पुल्लिंगत्वात्। तिलतंडुलोदकैः . . . — [3] D (schol.) मृगारैर्नित्यं (!) सेवितो देशो मृगाखरः। ततो मृदं गृहीत्वा वेदिं कुर्यात्। अस्यां संपातितं कृत्वा कुमार्यै प्रयच्छति। उच्यते मंत्रोक्तानि। आखर इदं हिरण्यं गुग्गुल्वयमौच- (cf. ii. 36. 7) गंधोदकमित्यर्थः. — [4] D (schol.) जामिक (!) मातृका तस्यैतत् (!) कर्म. — [5] D (schol.) . . . तस्य घटस्य दक्षिणेन अपक्रामयति। भगिनीभ्रातरावपक्रामणे (? Cod. °भ्रातानापपक्रा°) मंत्रशेषत्वात्. — [6] E Bi संतपावती. — [7] ii. 36. 5; D (schol.) नावं प्रक्षाल्य . . . संपातवतीं करोति. — [8] D (schol.) तत्पतिकामायारोहणं (!). — [9] Thus emended; D (text) प्रवृतंते; the rest प्रचृतन्तो; D (schol.) सप्त दामानि यस्या वत्सवत्याः। सा सप्तदाम्नी तस्याः सप्तदाम्न्याः संपाते संस्कृतायाः सप्त वत्सान् पूर्वं प्रमुंचंति कुमार्या अंतप्रतिवत्सः (!). — [10] Bü सपातवतर्षभम्. — [11] D (schol.) नवेन वाससा सपातवता या सेक्तारं (! for यः सेक्ता?) तु गो (!) ऋषभस्तस्यां वहति जानीयात् (? Cod. °यान्) कस्य विशेषो ऽयं आह (?). — [12] K Ch Bi Bh Bü उदर्द्दति; D (schol.) to the entire sūtra, इति प्रकृतस्यैव कर्मणो ऽस्य विधानात्. — [13] K P Bh यांम्यै; Ch D (text) जाम्यैः. — [14] v. 1. 4. — [15] Bü कृसरम्; Bh कृषरम्; the rest कृशरम्. — [16] v. 2. 8 (xx. 107. 11). — [17] This sūtra is wanting in D. — [18] vi. 60. 1. — [19] Ch अर्यले; Bh E Bi अर्यम्ले. —

जुहोति[1] । २२ । अन्तःस्रक्तिषु बलीन्हरन्ति[2] । २३ । आ-
पतन्ति यतः[3] । २४ । ॥ १० ॥ ॥ ३४ ॥

पुंसवनानि[4] । १ । रजउद्वासायाः[5] पुंनक्षत्रे । २ । ये-
वेहदिति[6] वाणं मूर्ध्नि विवृहति[7] बध्नाति । ३ । फालच-
मसे सरूपवत्साया दुग्धे व्रीहियवाववधाय मूर्छयित्वा-
ध्यण्डे[8] वृहतीपलाशविदर्यौ[9, 10] वा प्रतिनीय पैद्वमिव[11] । ४ ।
पर्वताद्दिव[12] इत्यागमसकृशरमाशयति[13] । ५ । युगतर्द्मना[14] सं-
पातवन्तं द्वितीयम्[15] । ६ । खे[16] लूनांश्च पलाशत्सरूनिवृत्ते[17]

---

[1] D (schol.) यावन्न काकाः । आकाशलकेभ्य (?) उत्तिष्ठंति तस्मिन्का- उषाकाल इत्यर्थः अयंग्णि जुहोत्याज्यं. — [2] P Bü हरत्य°. — [3] D (schol.) काका आगच्छंति तस्या दिशो वरागमनं ज्ञेयं । . . . इमा यानि पर्तविद्नानि समाप्तानि. — [4] Ath. Paddh. and Daç. Kar. पंचमे मासि. — [5] Bü has a colon here. — [6] iii. 23. 1. — [7] So only Bh; the remaining MSS. and Ath. Paddh. विवृहति. — [8] So K Bü Bi Ch (sec. man.) D (schol.); Ch (prim. man.) E and Ath. Paddh. (both MSS.) °ध्यंडे; D (text) °ध्यंगे; P Bh °धंड्के. — [9] So D (text and schol.); the rest वृहति°; one of the MSS. of the Ath. Paddh. has a colon (वृहति!). — [10] D (text) and Ath. Paddh. विदार्यौ; D फालचिवुकायाः सोमचम- साकारं कृत्वा तत्र . . . व्रीहीन्यवांश्च प्रक्षिप्य मूर्च्छयित्वा संचूर्ण्य अध्यंडे... पर्णफलेत्यप्रसिद्धा । पृषतिपलाशविदार्यौ वा प्रतिनीय पृषती वृहती पलाशं(!)विदारी वेलापत्वाशक इति प्रसिद्धः. — [11] D (schol.) and Ath. Paddh. रजउद्वासाया दक्षिणे नासिकाच्छिद्रे दक्षिणेनांगुष्ठेन नस्यकरणं; cf. Kāuç. 32. 21. — [12] v. 25. 1. — [13] So K P Bi Ch E D (text and schol.); Bü Bh °कृसरम्; Ath. Paddh. and Daç. Kar. अथ गर्भाधानमुच्यते । स्नातायां चतुर्थे ऽहनि... सूक्तेनाज्यं जुहुयात् । भक्तं पात्रे तिलमिश्रं गर्भिणीं प्राशयति. — [14] Before this word Ch E Bü insert तृणानि. — [15] Ath. Paddh. and Daç. Kar. अनेनैव सूक्तेन द्वितीयं भक्तं युगछिद्रं संपात्याभिमंत्र्य गर्भिणीं प्राशयति । पुष्पवतीरिति (viii. 7. 27) फलस्नपनं. — [16] So emended; MSS. के. — [17] K निवृत्त(त्रि°); P Bi निवृत्तें.

निघृष्याधाय[1] शिश्ने ग्रामं[2] प्रविशति[3]। ७। शमीमश्वत्थ इति[4] मन्त्रोक्ते ऽग्निं मथित्वा पुंस्याः[5] सर्पिषि पैद्वमिव। ८। मधुमन्थे[6] पाययति। ९। कृष्णोर्णाभिः[7] परिवेष्ट्य[8] बध्नाति। १०। यन्तासीति[9] मन्त्रोक्तं बध्नाति[10]। ११। ऋधङ्मन्त्र इत्येका यथेयं पृथिव्यच्युतेति[11] गर्भदृंहणानि[12]। १२। जम्भगृहीताय प्रथमावर्ज्जे[13] ज्यां त्रिरुद्ग्रथ्य[14] बध्नाति। १३। लोष्टानन्वृचं प्राशयति[15]। १४। श्यामसिकताभिः शयनं परिकिरति[16]। १५। यस्मिञ्छेद्वीरं जनयेदिति धातर्व्याभिरुदरमभिमन्त्रयते[17. 18]। १६। प्रजापतिरिति[19] प्रजाका-

---

[1] K P Bi Bh निकर्ष्या°; Bū निघृकष्या°; Ch निवृष्या°; the rest as above; cf. Kāuç. 26. 22; 36. 33. — [2] P धामं; Bh (शिश्ने)धग्रमं. — [3] D (schol.) चकारः युगतर्द्मना संपातवत्करणार्थस्तस्मात्कर्मभेदः. — [4] vi. 11. 1. — [5] K P Bh पुष्याः; E Ch पूस्याः; Bi पुष्पाः; D (schol.) पुंवत्सायाः गोघृतेनाग्निं (Cod. °घृद्देनमग्निं) प्रक्षिप्य रजउद्वासाया दक्षिणस्यां नस्य (!) दक्षिणेनांगुष्ठेन; cf. Kāuç. 32. 21; 35. 4. — [6] D (text and schol.) दधि°. — [7] So D (text); Ch E P Bi विष्णोर्णाभिः; K विष्णोर्नाभिः; Bū वृष्णोर्णाभिः; D (schol.) सेक्तारणकस्योर्णाभिस्तमग्निं (!?) परिवेष्य बध्नाति। पुंसवनं. — [8] Ch E P K Bū Bi परिवेष्यं; D (text) परिवेष्टा; E परिवेष्य. — [9] vi. 81. 1. — [10] D (schol.) इति शेषः प्रकरणात्। मंत्र उक्तौ परिहस्तौ हस्तिटकाविति (! for हस्तावर्तकाविति?) प्रसिद्धौ. — [11] v. 1. 1; vi. 17. 1–4; the third pratika is not found in any known Saṁhitā; D (schol.) एकेति सूक्तप्रसंगात्। यथेयं पृथिवीति नार्थसूक्तलिंगात्। उच्यते (! for अच्युतेति?) शिखानंतरीयसूक्तं (! for शाखान्तरीय°?) एतेषां गर्भवर्धनफलानि कर्माणि भवंति. — [12] Ch B गर्भबृंहणानि; Bū गर्भवृ°. — [13] D (schol.) ऋधङ्मन्त्र (v. i. i.) इत्येतामृचं वर्जयित्वा. — [14] K D (text) °द्ग्रथ्य; E °द्ग्रंथ्य; D (schol.) जंभेन गृहीतो गर्भो यस्या स्त्रियः तस्या ज्यां त्रिगुणां कृत्वा बध्नाति. — [15] D (schol.) मृल्लोष्टानन्वृचाभिमंत्रितान् जम्भगृहीतां प्राशयति। न संपाता उपसृष्टत्वात्. — [16] D (schol.) प्रथमावर्जे (v. 1. 1) इत्येवं. — [17] All MSS. धातर्व्याभिर्; is it to be emended to some word agreeing with ऋग्भिः, and formed upon the basis of the words धाता दधातु, which occur in each of the four verses, vii. 17. 1–4? — [18] E P Bi D उदग्र°. — [19] vi. 11. 3 or vii. 19. 1. —

माया उपस्थे जुहोति । १७ । लोहिताजापिशितान्याशयति[1] । १८ । वपान्तानि[2] । १९ । यौ ते मातेति[3] मन्त्रोक्तौ बध्नाति[4] । २० । यथेदं भूम्या अधि यथा वृक्षं वाश्मे यथायं वाह इति[5] संस्पृष्टयोर्वृक्षलिबुजयोः[6] शकलावन्तरेषुस्यकराञ्जनकुष्ठमदुघरेष्मन्मथिततृणमाज्येन[7, 8, 9, 10] संनीय संस्पृशति[11] । २१ । उत्तुदस्त्वेत्यङ्गुल्योपनुदति[12, 13] । २२ । एकविंशतिं[14] प्राचीनकण्टकानलंकृताननूक्तानादधाति[15] । २३ । कूदीप्रान्तानि[16] ससूत्राणि । २४ । नवनीताभ्यक्तं कुष्ठं[17] त्रिरह्नः[18] प्रतपति[19] त्रिरात्रे[20] । २५ । दीर्घोत्पले ऽवगृह्य[21]

[1] Bi लोहितायाः°. — [2] D (schol.) भक्तसुरां(!)प्रपामित्येतानि चात्र कर्माणि भवन्ति; see Kāuç. 12. 9. — [3] viii. 6. 1. — [4] D (schol.) वत्र पिङ्गलस्य सर्षपौ मंत्रोक्तौ शुक्लपीतौ संपातवन्तौ कृत्वा दृंहणमंत्रलिङ्गात्। यस्ते गर्भमिति (viii. 6. 18) जातानां रक्षणं अत (?) एव गर्भदृंहणादनन्तरविधानं। गर्भदृंहफलां (! for लानि) समाप्तानि; Ath. Paddh. अथ सीमंतोन्नयनमुच्यते। अष्टमे मासि कर्म कुर्यात् । अव्यचसश्च (MSS. अव्यसश्च, xix. 68. 1) इत्यादि अभ्यातानांतं कृत्वा । यौ ते मातेत्यर्थसूक्तेन आज्यं जुहुयात्। रक्तपीतसर्षपरक्षपुट्टलिकां (second Cod. °पुर्ट्ट°) कृत्वा । संपात्याभिमंत्र्य ग्रीवायां बध्नाति । नाभिमात्रं यावत्. — [5] ii. 30. 1; vi. 8. 1; 9. 1; 102. 1. — [6] Ch °लुबुजयोः; E °लिंबुजयोः. — [7] D (text) °स्थकलां°. — [8] All MSS. °कुष्ट°. — [9] Ch °मधुघ°; K °मधदुघ°. — [10] K Bh °मथितं. — [11] D (schol.) अनुरोधनं संवननत्वात्. — [12] iii. 25. 1. — [13] Ch °ङ्गुल्योनुयदति; E °नुदपति; Bi D (text) °पदधति; D (schol.) सूत्रखट्वा (!for सूत्रं खट्वाया?) अंगुल्योप समीपे ऽस्यां (Cod. समीप स्यां) तुदति । वशीकरणमनुलिंगात् (cf. अनुव्रता iii. 25. 4?). — [14] E D (text) एकविंशति°. — [15] D (schol.) या प्लीहानमिति लिङ्गात् (iii. 25. 3) मदनीकंटकान्पूर्वाग्रान् (Cod. पूर्वाग्रा) सकृदनूच्यादधाति. — [16] D (text) कुदिः; D (schol.) एकविंशतिमेव वदर्यग्राणि (!) लाचारक्तसूत्रेण आदधाति प्रकृतत्वात् ; cf. Kāuç. 21. 13. — [17] Bū Bh Ch E D (text and schol.) कुष्टं. — [18] K Ch E P B D (text) °स्त्रिर°. — [19] P D have a colon here. — [20] D (schol.) उत्पल कुष्टं (!) नवनीतेनाभ्यज्य त्रिः पूर्वाह्णमध्यंदिनापराह्णेषु कुष्टं(!) त्रिः प्रताप्यादधाति. — [21] Bi अवगृह्य; Ch चगृह्य.

आवेष्टनेन[1] वंशाग्रमवबध्य मध्यमायां बध्नाति[3]। ६। श-
यनपादमुत्पले च[3]। ७। आकृष्टे च[4]। ८। आकर्षेण[5] ति-
लाञ्जुहोति[6]। ९। इदं यत्प्रेण्य इति[7] शिरःकर्णमभिम-
न्त्रयते। १०। केशान्धारयति[8]। ११। भगेन मा न्यस्ति-
केदं खनामीति[9] सौवर्चलमोषधिवच्छुक्लप्रसूनं[10, 11] शिर-
स्युपचृत्य ग्रामं प्रविशति[12]। १२। रथजितामिति[13] मा-
षस्मरान्निवपति[14]। १३। शरभृष्टीरादीप्ताः प्रतिदिशमभ्य-
स्यत्यर्वाच्या आवलेखन्याः[15]। १४। भगमस्या वर्च इति[16]
मालानिष्प्रमन्ददन्तधावनकेशमीशानहतायाः[17] अनुस्तर-
ण्या वा कोशमुलूखलदरणे त्रिशिले[18] निखनति[19]। १५।

---

[1] K आयवेष्टनेन. — [2] D (schol.) अत्र पद्यमध्यमायां (! for खाङ्गा°?)
वंधनं संपाता स्युः. — [3] D (schol.) बध्नाति. — [4] D (schol.) आकृष्टः मातृकेति
प्रसिद्धाभिधानस्तस्मिन् शयनपादं बध्नाति। चकारात्. — [5] D (schol.)
आकर्षः लोहकारणं। अंगाराकर्षणार्थं। कुटका तेन तिलान् जुहोति. —
[6] K Bü D (text) तिलां; the rest तिलान्. — [7] vi. 89. 1. — [8] K
Ch E P Bi धारयन्ति; Bü D (text) as above; D (schol.) यां निरोद्धुम्
(Cod. या निरोद्धम्) इच्छति तस्याः केशान् धारयति. — [9] vi. 129. 1;
139. 1; vii. 38. 1. — [10] Ch E P D (text and schol.) °मोषधिव°. —
[11] K °सूतं; Ch °सून. — . [12] D (schol.) स्रजात्। शुक्लप्रसूनं। मूलं
दर्भेण परिवेष्य शिरस्युपचृत्य ग्रामं प्रविशति। मूलग्रहणे हि वंधनं स्यात्।
अथ ओषधीवत्। सुवर्चला प्रसिद्धा त्रिसंध्यासादृशी शुक्लप्रसूनं कर्मां-
तरेण मूलविशेषणत्वात्; cf. Kāuç. 33. 13 fg. — [13] vi. 130. 1. —
[14] E P K माख°; D (schol.) रथजितामिति त्रीणि (vi. 130-132) शय-
नांतरत्वात्। माषस्वरानाम (!) उप्तपूर्वेषु अध्यस्मिन् वा अन्य उते (! for
उप्ते?) ये माषा जाता ते माषस्वारास्तां निवपति यस्या निरोधमिच्छति।
तस्याः शिरसि. — [15] So emended; Ch E P Bi Bh D अर्वाच्यावलेख°;
K Bü अर्वाच्या अवले°; D (schol.) अवलेखनी कथिता (Kāuç. 35. 25)
अर्वाच्या अधिमुखाः(!) शरफालीस्ताः प्रतिदिशमभिमुखायाः क्षिपति. —
[16] i. 14. 1. — [17] Ch E Bi D (text) निप्रमंद. — [18] Ch शिले;
cf. sū. 17. — [19] D (schol.) विद्वेषणार्थत्वात्। क्रमभेदः। तस्यां
माला शकुनिःप्रमंदः (! for शंकुनिःप्र°?) क्रीडायवर्गाजेदुकः (!)। तस्यां

संविशति[1] । २६ । उष्णोदकं त्रिपादे पत्तः[2] प्रवद्धाङ्गुष्ठाभ्यामर्दयञ्छेते[3, 4] । २७ । प्रतिकृतिमावलेखनीं[5] दार्भ्यूषेण[6] भाङ्गज्येन[7] कराटकशल्ययोलूकपत्त्रयासितालकाण्डया हृदये विध्यति[8] । २८ । ॥ ११ ॥ ॥ ३५ ॥

सहस्रशृङ्ग इति[9] स्वापनम्[10] । १ । उदपात्रेण संपातवता शालां संप्रोक्ष्यापरस्मिन्द्वारपक्षे न्युब्जति[11] । २ । एवं नग्नः[12] । ३ । उलूखलमुत्तरां स्रक्तिं[13] दक्षिणशयनपादं[13] तन्तूनभिमन्त्रयते[14] । ४ । अस्थाद् द्यौरिति[15] निवेष्टनम्[16] । ५ ।

---

[1] D (schol.) मंचकेशे (!?) अधः कृता (!) तत्र संविशति संवेशने मंचः । ... भर्तुरिदं कर्म ममैव कृणुतं वशे इति (iii. 25. 6[d]) मंत्रलिंगात् । इति विधानं परपुरुषनिवर्तनार्थत्वात् । स्त्रीकर्मसु विधानं । अनुरोधनमन्यसंपर्कनिरोधः । यंतासीत्यत्र (vi. 81. 1) आरभ्यानुरोधनाधिकारः; see sūtra 11. — [2] K P Bi Bh पत्तुः; D (text and schol.) पतः; Ch त्रिपादेत्तः. — [3] Bū प्रवध्या°. — [4] K Bū Bh P अर्दयं छेते; E D (text) अर्दयंत्येके; Ch अर्दयंत्येके; D (schol.) त्रिपादशिक्ये उष्णोदकं कृत्वा शयनीयस्य पतः (!) प्रकर्षेण वध्नाति । पादांगुष्ठाभ्यामर्दयन्न छिक्यं (!) चालाछेते (! ?). — [5] Bi पथिकृतिम°. — [6] E P Bi Bh दार्भ्युषेण; cf. Kāuç. 32. 8, and D (schol.) to 47. 55. — [7] K P Bh भाङ्ग्व्येन. — [8] D (schol.) तत्प्रतिरूपाकृतिः । आवलेखनीप्रकृतिः । आवलेखनी कुम्भकारवक्रादवलिखिता मृत् । ... असितं कृष्णं अलं काणुं (!) यस्याः सा असितालकांडा (sc. इषुः) तया विध्यति; cf. Kāuç. 47. 54; 49. 23. — [9] iv. 5. 1. — [10] D (schol.) इह स्वापनकर्मविधानं । ग्रामवरणार्थत्वात् । मैथुनचरणविघ्ननाशकर्तृत्वादित्यर्थः. — [11] D (schol.) स्त्रीगृहे उदपात्रे(ण) संप्रोक्ष्य उदपात्रशेषं अपरस्मिन् द्वारपक्षे न्युब्जति । द्वारपक्षं कपाटमपरं धुरादितरं सव्यकपाटबुध्नरावर्जयति (? Cod. °ब्रध्नेर°). — [12] E has a colon between एवं and नग्नः; D (schol.) शाकटमपनीय (Cod. °नीयं) पूर्वकर्म करोत्येवंशब्दात्. — [13] D divides sūtras at these points. — [14] D (schol.) उलूखलमभिमंत्रयते । ... शयनीयगृहस्योत्तरकोणं अभिमंत्रयते । ... स्त्रीमंचकपादं दक्षिणमभिमंत्रयते ... — [15] vi. 77. 1 (vi. 44. 1). — [16] D (schol.) नाम प्रद्राविणीव्यभिचारिण्या (Cod. प्रदा°) निरोधमंत्रलिंगात्. —

मालामुपमथ्यान्वाह[1] । १६ । त्रीणि केशमण्डलानि कृष्णसूत्रेन विग्रथ्य[2] त्रिशिले[3] ऽश्मोत्तराणि[4] व्यत्यासम्[5]। १७। अथास्यै भगमुत्खनति

यं ते भगं निचखुस्त्रिशिले यं चतुःशिले ।
इदं तमुत्खनामि[6] प्रजया च धनेन चेति ॥ १८।

इमां खनामीति[7] बाणापर्णीं[8] लोहिताजाया द्रप्सेन संनीय शयनमनु परिकिरति[9] । १९ । अभि ते ऽधामित्यधस्तात्पलाशमुपचृतति[10] । २० । उप ते ऽधामित्युपर्युपास्यति[11]। २१ । कामं विनेष्यमाणो ऽपाघेनासंख्याताः शर्कराः परिकिरन्व्रजति[12]। २२। संमृद्नञ्जपति[13]।२३। असंमृद्नन्[14]।२४।

---

दतधावनं तस्या एव च केशाः . . . । ज्वरहताया गोः उलूखलदरणे तिस्रः शिला निहत्य तत्र कोशं निहन्यात् । अत उलूखलं निहन्यात् । दरण उलूखले गर्तः । विद्विषणलिंगात्. —

[1] D (schol.) तस्या एव पुष्पस्रजं विमथ्य (? Cod. विमह्यं ?) अन्वाह तामेव स्त्रियं. — [2] E P Bi Bh K D (text) °गृथ्य. — [3] Ch शिले; cf. sū. 15; D (text and schol.) त्रिशिल्पे; Bi त्रिशिलो. — [4] P च्मोत्तराणि; Bi श्मान्तराणि. — [5] D (schol.) तस्या . . . पुंजकेशान् कृष्णसूत्रेण बध्वा त्रिशिल्पे (!) गर्ते निहंति । केशमंडलमश्न्येत्येवमश्मोत्तराणि (!) भवंति । व्यत्यासवचनमधस्त्रयाणामपि (Cod. °त्रयमाणाम°) त्रिखननं मा भूत्. — [6] So all MSS.; is the word to be emended to °खनामसि or °खनाम्यहं? — [7] iii. 18. 1. — [8] Ch वाणार्णी; Ath. Sarvānukramaṇī to iii. 18, वाणापर्णी. — [9] D (schol.) रक्तवर्णाया अजाद्रप्सेन वाणापर्णीं संचुद्य एकीकृत्य वाणापर्णि (!) शरपुंखेति (Cod. °पुखेनि) प्रसिद्धा । तया सपत्न्या शयनमनु परिकिरति. — [10] iii. 18. 6; D (schol.) पादेन शयनाधस्तात् वाणापर्ण्या पत्रं बध्नाति. — [11] iii. 18. 6ᵇ; D (schol.) पादेनोपरि क्षिपति. — [12] D (schol.) काममिच्छामपनयिष्यन् (Cod. °ष्य!) परपुरुषं (? Cod. °प) यां । अप नः शोशुचदिति (iv. 33. 1) अनेनापरिगणिताः शर्करा अभिमंत्रिताः (cf. Kāuç. 50. 2) । परिकिरन्व्रजति । इह विधानं स्त्रीकामस्य विनेयत्वात् । ईर्ष्याविनाशनान्यत एव पठितानि. — [13] MSS. संमृध्नं; D (schol.) ताः संमर्दयन् जपति; cf. Kāuç. 27. 19. — [14] Bū असंमृध्ना; K Ch E P B असंमृध्नम्; wanting in D. —

ईर्ष्याया ध्राजिं जनाद्विश्वजनीनात्त्वाष्ट्रेणाहमिति[1] प्रतिजापः[2] प्रदानाभिमर्शनानि[3]। २५। प्रथमेन वक्षणासु[4] मन्त्रोक्तम्। २६। अग्नेरिवेति[5] परशुफाण्टम्[6]। २७। अव ज्यामिवेति[7] दृष्ट्वाश्मानमादत्ते[8]। २८। द्वितीययाभिनिदधाति[9]। २९। तृतीययाभिनिष्ठीवति[10]। ३०। छायायां सज्यं[11] करोति[12]। ३१। अयं दर्भ[13] इत्योषधिवत्[14]। ३२। अग्ने जातानिति[15] न वीरं जनयेत्प्रान्यानिति[16] न विजायेतेत्यश्वतरीमूत्रमश्ममण्डलाभ्यां[17, 18] संघृष्य[19] भक्ते ऽलंकारे[20]। ३३। सीमन्तमन्वीक्षते। ३४। अपि वृश्चेति[21]

---

1 vi. 18. 1; vii. 45. 1; 74. 3. — 2 Ch E प्रतिजायः. — 3 K P Bi प्रजाना°; D (schol.) यस्येर्ष्यां विनेतुमिच्छति तमभिमृश्य जपत्यन्यतमं जनाद्विति द्वे (vii. 45. 1, 2)। प्रदानं यत् किंचिदभिमंत्र्य प्रददाति। अभिमर्शनं यस्येर्ष्यां विनेतुमिच्छति तमभिमृश्य जपति. — 4 D (text) वक्ष्यमणासु; D (schol.) ईर्ष्याया ध्राजिमित्यनेन (vi. 18. 1) हृदये ऽग्निनिर्वापणं। मंत्रोक्तत्वात्। जनाद्विश्वजनीनादित्यृच अध्यातस्य (! for अध्मा°?) वा हृतेमोंचनं (Cod. वाट्टते°?). — 5 vii. 45. 2. — 6 Bi पर्शु; D (schol.) पर्शुना तप्तेन कथितं (! for क्वथितं?) फांटं पाययति। प्रमेहणवत् (see Kāuç. 25. 10, 11)। मन्युविनयमिह (Cod. मन्युर्वि°) विधानं मन्यो स्त्रीविषयत्वात्. — 7 vi. 42. 1. — 8 D (schol.) एकया स्त्रियं दृष्ट्वा पाषाणमादत्ते. — 9 D (schol.) द्वितीयर्चा (vi. 42. 2) भूमौ निदधाति. — 10 vi. 42. 3; D (schol.) तमेवाश्मानं. — 11 K सृज्यं. — 12 D (schol.) त्वन्निमित्तो (! for यन्नि°?) मन्युस्तस्य छायायां धनुरारोपयति. — 13 vi. 43. 1. — 14 D (schol.) दर्भमूलं दर्भेण परिवेष्ट्य केशेषूपचृतति (Kāuç. 33. 13; 36. 12); । सर्वमन्युविनयनालिंगविशेषात्। यथावश इति (vi. 43. 3c) सर्वत्रोपपत्ते स्त्रीनिमित्तमोषधिनयनं प्रकरणात्। ओषधिवदिति कर्मातिदेशार्थं. — 15 vii. 34. 1. — 16 vii. 35. 1. — 17 Ch विजायन्तेत्य°; E विज्ञायतेत्य°; D विजायतेत्य°. — 18 E Ch (prim. man.) अश्वमण्डलाभ्यां. — 19 Ch संवृश्य; Bi संमृश्य; D (schol.) संकर्ष्य; cf. Kāuç. 26. 22; 35. 7. — 20 D (schol.) अश्वतरी खरी तस्या मूत्रं अश्ममंडलाभ्यां संकर्ष्य तद्भक्तं कृत्वा तत्तस्यै ददाति। अथवास्या अलंकारे; cf. Kāuç. 28. 9, 10. — 21 vii. 90. 1; D (schol.) तृचेन प्रसूताया विटमन्वाह. —

जायायै जारमन्वाह।३५।क्लीवपदे बाधकं धनुर्वृश्चति[1]।३६। आशये ऽश्मानं प्रहरति[2]। ३७। वृषिक इति[3] बाणापर्णीम्[4]। ३८। आ ते दद इति[5] मन्त्रोक्तानि संस्पृशति[6]।३९। अपि चान्वाहापि चान्वाह[7]। ४०। ॥ १२ ॥ ॥ ३६ ॥

॥ इत्यथर्ववेदे कौशिकसूत्रे चतुर्थो ऽध्यायः समाप्तः ॥

---

[1] D (schol.) खंटपदे (! for षंड°?) कृत्वा छिनत्ति विट(!) पुमान्भवति. — [2] D (schol.) आशाया (! for आशयो?) जारस्य संगमनदेशः (Cod. संगमनं देशं) संकेतकः देशः तत्राश्मानं निक्षिपति. — [3] vii. 113. 1. — [4] D (schol.) शिरपुंखासाशये (! for शरपुखामाशये?) प्रहरति द्वाभ्यां. — [5] vii. 114. 1. — [6] D (schol.) वक्ष्यमाणानि हृदयं मुखमिति मंत्रोक्तानि संस्पृशति जारस्य. — [7] D (text) has the words अपि चान्वाह but once; D (schol.) स्त्रीकर्माणि समाप्तानि. —

॥ ओं ॥

अस्वयो यन्तीति[1] क्षीरौदनोत्कुचस्तम्बपाटाविज्ञाना-
नि[2.3.4] । १ । सांग्रामिकं वेदिविज्ञानम्[5] । २ । वेनस्तदि-
ति[6] पञ्चपर्वेषुकुम्भकमण्डलुस्तम्बकाम्पीलशाखायुगेध्मा-
क्षेषु पाण्यो रेकविंशत्यां[7] शर्करास्वीक्षते[8] ।३। कुम्भमहतेन
परिवेष्ट्याधाय शयने विकृते संपातानतिनयति[9] । ४ । अ-
नतीकाशमवच्छाद्यारजोवित्ते कुमार्यौ[10] येन हरेतां ततो
नष्टम्[11] । ५ । एवं सीरे साक्षे[12] । ६ । लोष्टानां कुमारीमह

---

[1] i. 4. 1; D (schol.) पूर्वादि समाम्नानि । संहिताविधिग्रहे अथ-
दीनां प्रतीकानां संहिताविधिरुच्यते। अंवयो यंतीति अस्य सूक्तस्य तत्-
ज्ञानफलं कर्मोच्यते । कस्य संशये प्राणनागेशेगमनाभ्यामभ्यस्य (?) सद्-
सद्योगाद्व्याधितस्य जीवमरणाभ्यां प्रजनने स्त्रीप्रयोगात् । एवमन्यत्रापि
यद्येतदेवं भवेत्तत्रायं विकारो भवेदिति । संकल्पयेन्न चेत्ततो (Cod.
चेततो) न कानि पुनस्तानि . . . — [2] D (schol.) उत्कुचस्तिस्रः स्तावर-
ज्जूरिति; Kāuç. 15. 13, 14. — [3] D (text and schol.) पाठा. — [4] D
(schol.) विज्ञानानि लोके प्रसिद्धानि भवंति. — [5] D (schol.) जपं जरा-
यत्वावधारणं (?) फलं संग्रामकर्म वेदि (!) कृत्वा प्रकृतेन सूक्तेन (i. 4. 1)
अभिमंत्र्य चिंतयेद्विशेषं. — [6] ii. 1. 1. — [7] So emended; Ch एकवि-
शत्या; the rest एकविंशत्या; D (schol.) उभयोर्हस्तयोरेकविंशतिशर्करा
कल्पेत । पाण्योरसमासकरणं. — [8] K Bü शर्कराःस्वो°. — [9] (?)
अभिनयति; E D (text) आनयति; D (schol.) इत्यतीष्टवेष्टनं नयतीव
भिमंत्रणनिवृत्त्यर्थं. — [10] D (schol.) कुमार्यै. — [11] D (schol.)
विज्ञेयं । सुपर्णादि. — [12] D (schol.) हले गोभ्यां युक्ते एवमेव कुर्यात्
अहतेन परिवेष्य कुमार्योरिव (! for कुमार्योरिव?) माजनं. —

यमिछसि तमादत्स्वेति[1] । ७ । आकृतिलोष्टवल्मीकौ कल्याणम्[2] । ८ । चतुष्पथाद्बहुचारिणी[3] । ९ । श्मशानान्नचिरं जीवति[4] । १० । उदकाञ्जलिं निनयेत्याह[5] । ११ । प्राचीनमपक्षिपन्त्यां कल्याणम्[6] । १२ । ॥ १ ॥ ॥ ३७ ॥

जरायुज इति[7] दुर्दिनमायन्प्रत्युत्तिष्ठति[8] । १ । अन्वृचमुदवज्रैः[9] । २ । अस्युल्मुककिष्कुरूनादाय[10, 11] । ३ । नग्नो ललाटमुन्मृजानः[12] । ४ । उत्साद्य बाह्यतो[13] ऽङ्गारकपाले शिग्रुशर्करा जुहोति । ५ । केराकीवादधाति[14] । ६ । वर्ष-

---

[1] D (schol.) चतुरो लोष्टान्गृहीत्वा प्रेषं ददाति. — [2] D (schol.) अनयोर्लोष्टयोर्ग्रहणे अभिलिखितार्थसंपत् (Cod. °सपत्). — [3] D (schol.) कुमारी बहून्पुरुषान्गच्छति. — [4] D (schol.) सैव कुमारी श्मशानात् गृहीत्वा हरंति एवं पूर्वत्र. — [5] D (schol.) कुमारी (! for °रीं?) ब्रूयात्. — [6] D (schol.) पूर्वस्यां दिशि अंजलिं चिपत्यभिप्रेतफलं। विधानसंहितानि कर्माणि कथितानि । तदंतरा नैमित्तिकप्रतीकानि तस्मात्तेषां विधिः क्रियते । — [7] i. 12. 1. — [8] E P दुर्दिने प्रायन्; D (schol.) दुर्दिनं मेघानां विनाशहेतुः । तद्विनाशायागच्छन् सूक्तं जपन् । प्रत्युत्तिष्ठति गच्छतीत्यर्थः । प्रायश्चित्तं दुर्दिनाश्रयत्वात् । यद्येवं क्रमस्तु किं कृतः उच्यते प्रायश्चित्तत्वात्. — [9] K उदव्रजैर्; E °वजैर्; Bü वज्रैर्; cf. Kāuç. 47. 31; 49. 13; D (schol.) प्रत्युत्तिष्ठति प्रहरणमंत्राः (? Cod. °णामांत्र! x. 5. 15, 42, 50; cf. Dārila to Kāuç. 47. 31) चैतदुदवज्रसंस्कारस्य चिरकालनिष्पत्तिस्ततश्च विनाशः स्यात्. — [10] D (text) उल्मुकः. — [11] K P B Bh किःकुरून्; E Ch विष्कुरून्; D (schol.) to the entire sūtra: प्रत्युत्तिष्ठतीति वाक्यशेषः ।... किंकुरवः मुखीको (!) चीरः । तानादाय प्रत्युत्तिष्ठति दुर्दिनं किष्कुरूणां समासो विकल्पार्थः । नग्नः दुर्दिनं प्रत्युत्तिष्ठतीति शेषः । साकांचत्वात्. — [12] D (schol.) नग्नः दुर्दिनं प्रत्युत्तिष्ठतीति शेषः ।... ललाटं तन्मर्दयन्. — [13] D (schol.) गृहपटलमपनीय गृहाद्बहिरवस्थितो (Cod. ग्रहातवहिरवस्थितो) ऽङ्गारपूर्णे कपाले शिग्रुपर्णाणि जुहोति । शर्करा वा. — [14] E D (text) करीराकांव्; Ch करार्कांव्; Bi कीराकांव्; D (schol.) केरापर्णीति या सुराष्ट्रे पुवरीकेति (! for पुंडरीकेति?) मालवेषु उच्छाद्य (! for उत्साद्य) वेराकांवादधाति (!)

परीतः प्रतिलोमकर्षितस्त्रिः[1] परिक्रम्य खदायामर्कं[2] क्षिप्रं संवपति[3][4]। ७। नमस्ते अस्तु यस्ते पृथु[5] स्तनयित्नुरित्यशनियुक्तमपादाय[6]। ८। प्रथमस्य[7] सोमदर्भकेशानीकुष्ठलाक्षामञ्जिष्ठीबदरहरिद्रं[8, 9] भूर्जशकलेन[10] परिवेष्ट्य मन्यशिरस्सुर्वरामध्ये निखनति[11]। ९। दधि नवेनाश्नात्या संहरणात्[12]। १०। आशापालीयं तृतीयावर्जं[13] दृंहणा-

---

अंगारकपालेन चोभयतंत्रं विकृष्टदेशत्वात्; cf. Dārila fol. 35ᵃ l. 6; (to Kāuç. 7. 4): रेरार्कावादधाति; cf. also अर्कं in the next sūtra. —

[1] K P Bū त्रिष्प॰; Ch तृष्प॰. — [2] E अर्कें. — [3] Ch E संविशति. — [4] D (schol.) to the entire sūtra एवं पूर्वत्र अर्कं चिप्रं संवपति। वर्षेणातिपीडितो वर्षपरीतः . . . उभयोर्वक्ष्यमाणं (Cod. ॰चमाणं) प्रायश्चित्तं त्रिः परिक्रम्य खदायामर्कं (Cod. ॰र्यं) चिप्रं संवपति। गर्तः स्वभावजः त्रिः सर्वत्र गत्वा खदायामर्कं समुतजालं (! for समुप्त॰?) प्रकृतेन सूक्तेन पिंडीकृतं चिपति. — [5] i. 13. 1; vii. 11. 1. — [6] So Ch E; K Bū Bi Bh P D (text) अशनिं युक्तम्; D (schol.) to the entire sūtra, त्रिष्परिक्रम्य खदायामशनिं(!)युक्तं चिप्रं संवपतीति शेषः। साकांचत्वात्। सन्निधिः स्यात्। अशनि (!) हिमशर्करापस्तेनाशनिविनाशितं (!) तदशनियुक्तं न शीघ्रं खदायां सूक्तान्ते चिपति। अशनिविष्कदुःकाश्मवर्षाणि (!)। अश्निन्यपश्मफललिङ्गात्. — [7] D (schol.) प्रथमस्य सूक्तस्य, i. 13. — [8] Bh कशानी; D (schol.) केशानी प्रसारिणीति उच्यते। उपक्लिन्नेषु प्राकारे (! for उपखिन्नेषु or उपकीर्णेषु प्राकारेषु?) प्रायेण जायते. — [9] All MSS., except Ch D (text) ॰कुष्ट॰. — [10] K P Bū Bi Bh भुज॰; Ch भज॰. — [11] D (schol.) भूर्जावयवेन सर्वाणि वेष्टयित्वा अधःशिरः छिद्रं कृत्वाभिमंत्र्य सस्यमध्ये निखनति। अशनिरचा. — [12] D (schol.) दधि च नवं धान्यं न (! for च) भचयेद्यावन्न धान्यं गृहमानीतं. — [13] Ch तृतीयया; D (schol.) आशानामाशापालेभ्य (i. 31. 1) इत्यस्य दृंहणान्युक्तानि (? Cod. इत्यस्येंद्रहणि उलानि) कर्माणि बहुवचनानुपपत्तिः। ज्योतिरायतनस्य भौमसंबंधात् (Cod. भौमं॰)। उभयान्संपातवत इति द्वितीयतृतीयमेकतोऽन्यं शमनं भौमं जपतीति भौमस्य द्वितीयसंबंधादाशापालीयस्य च विशेषेण जपमात्रेण तृतीयामृचं मुक्त्वा (i. 31. 3) अत एव भौमेन सह एव (cf. sūtras 12-16).

नि।११।भौमस्य इतिकर्माणि[1]।१२। पुरोडाशानश्मो-
त्तरानन्तःस्रक्तिषु[2] निदधाति । १३ । उभयान्संपात-
वतः[3]।१४। सभाभागधानेषु[4] च।१५। असंतापे ज्यो-
तिरायतनस्यैकतो ऽन्यं शयानो[5] भौमं जपति।१६। इयं
वीरुदिति[6] मदुघं[7] खादन्नपराजितात्परिषदमाव्रजति।१७।
नेच्छत्रुरिति[8] पाटामूलं प्रतिप्राशितम्[9]।१८। अन्वाह[10]।१९।
बध्नाति[11]।२०। मालां सप्तपलाशीं धारयति[12]।२१।
ये भक्षयन्त इति[13] परिषद्येकभक्तमन्वीक्षमाणो भुङ्क्ते[14]।२२।

---

[1] K Bū दृति°; E D (text) दृति°; Ch द्रृति°; is the word to be emended to दृढकर्माणि? D (schol.) सत्यं बृहदित्यस्य (xii. 1. 1) यौ- (!for भौम-?) फलानि कर्माणि। उभयोः सूक्तयोः कर्माण्युच्यंते. — [2] D (schol.) पुरोडाशाश्चत्वारः। अभिमंत्र्य न सपाताः शब्दान्तरत्वात्। गृहस्याभ्यंतरकोणेषु (Cod. गृहास्यांभ्यं°) निहंति। एकैकस्य पुरोडाशस्य पाषाणमुपरि कृत्वा. — [3] D (schol.) पुरोडाशानश्मनश्च सपातवत् करोति। — [4] D (schol.) पूर्वकर्माणि (! for °कर्मणी?) भवतः निखननं पूर्ववत्. — समाजमेलकस्थानं भागधानं महाधनगृहमिति स्रक्तिष्विति देशनियमः चकारेण सर्वातिदेशात्. — [5] K शयो; D (schol.) to the entire sūtra एकाग्नेरायतनस्य असपातयुक्ते (! for असंताप°) देशे श्मानधोमुखः (! for शयान अधो°?) भौमं (xii. 1) जपति। एकेन पार्श्वेन पर्यावर्तेत आशापालीयं (i. 31) तु शयानो (Cod. शयनो) जपति नियमस्तु भौमस्यैव. — [6] i. 31. 1. — [7] E Bū (prim. man.) मधुघं; K मदुखं (खादन्); D (schol.) जनसमूहं ज्येष्ठीमधुकं(!) भक्षयन् आव्रजने मंत्रः। . . . प्रत्यर्थजपदोषशमनं प्रायश्चित्तं. — [8] ii. 27. 1. — [9] D (schol.) पाटामूलं खादन्नपराजितात्प्रतिप्राशितमाव्रजति लिंगात्. — [10] D (schol.) प्रतिवादिनमन्वाह. — [11] D (schol.) यदि मूलसंप्रत्ययः अन्वाहेति मध्ये किं पठितं। अत्र वचनान्यवधान्यकर्मत्वात् (!). — [12] So Bh D (text); the remaining MSS. of the text धारयंति; D (schol.) पाठास्रजं (!) पर्णां (!) बिभर्ति सर्वस्य धारणस्य बाहौ बंधनमंत्रलिंगात् (cf. ii. 27. 3)। न संपाता शब्दांतरत्वात्। दूष्या दूषिरसीत्यस्यामुक्तास्य (!) विधानं (cf. ii. 11. 1; Kāuç. 39. 1 fg.)। खादन्नपराजितात्परिषदं नाव्रजति। तस्योपजीवनार्थं स्वक्तमेह्येतत् (!for भक्त°?)। सर्वं पुनरुच्यते. — [13] ii. 35. 1. — [14] D (schol.) एकैनैव भुंजत इति। नैकभक्तं परिषद्येकभोजने परिषत्तुल्या समवायमात्रं लोकोपचारादि तामेव परिषदं ग्रासादनंतरमीक्षमाणाः कल्पांतरे यत्रैतद्दृक्षनां मध्ये एको भुंक्त इति अविशेषणत्वात्. —

ब्रह्म जज्ञानमित्यध्यायानुपाकरिष्यन्नभिव्याहारयति[1] । २३ । प्राशमाख्यास्यन्[2] । २४ । ब्रह्मोद्यं वदिष्यन्[3] । २५ । ममाग्ने वर्च[4] इति विभुङ्क्ष्यमाणः[5] प्रमन्तरज्जुं[6] बध्नाति । २६ । सभा च मेति[7] भक्षयति[8] । २७ । स्थूणे गृह्णात्युपतिष्ठते[9] । २८ । यद्वदामीति[10] मन्त्रोक्तम् । २९ । अहमस्मीत्यपराजितात्परिषदमाव्रजति[11, 12] । ३० । ॥ २ ॥ ॥ ३८ ॥

दूष्या दूषिरसीति[13] स्राक्त्यं बध्नाति[14] । १ । पुरस्तादग्नेः पिशङ्गं[15] गां कारयति[16] । २ । पश्चादग्नेर्लोहिताजम्[17] । ३ ।

---

[1] iv. 1. 1; D (schol.) उपाकर्मसु शिष्यानभिव्याहारयति सूक्तं । कलहपरिहासदोषनाशात् (Cod. °परिहार°) प्रायश्चित्तत्वं. — [2] D (schol.) प्रतिप्रश्नं कथयिष्यन् सूक्तमभिव्याहारयति । . . . प्रतिवादिनो जपनाशात्प्रायश्चित्तत्वं (Cod. जयपनाशाप्राय°). — [3] D (schol.) वाक्यविचारं कथयिष्यन् प्रत्यर्थिना सह प्रतिवादिनो जपनाशात् प्रायश्चित्तत्वं. — [4] v. 3. 1. — [5] K P Bh Bi Ch E विभुंचमाणः; cf. Kāuç. 23. 9. — [6] D (text) प्रमत°; D (schol.) प्रमतरज्जुः । चाचकाणां (! for चाक्रिकाणां?) अवलंबनराज्ञः (! for °रज्जुः?) तामभिमंत्र्य विभागं करिष्यन्पिता बध्नीयान्न संपाताः शब्दान्तरत्वात् । मालावत् कलहनाशदोषापगमात्. — [7] vii. 12. 1. — [8] D (schol.) चीरौदनं . . . सभां प्रविशन्. — [9] D (schol.) सभास्थूणे सूक्तान्ते. — [10] xii. 1. 58; cf. Kāuç. 24. 14. — [11] xii. 1. 54. — [12] Ch E °प्रोति (instead of °व्रजति); D (schol.) यत्रतत्रस्था (!) परिषदमागच्छति. — [13] ii. 11. 1. — [14] D (schol.) अप्रतिहार्यां (?) कृत्वा . . . प्रत्याहरणमुच्यते । . . . एककर्मा (! for °र्मणां?) कांडिका समाप्तः (!) शान्त्युदकान्ते बंधनं । आज्यभागान्ते शान्त्युदकं । तत्र शान्त्युदकक्रियादर्शनात् । पूर्वाह्णे कर्मस्मृतं उत्तरतंत्रादनंतरम् (Cod. °मे) कृत्यादेः प्रतिहरणात् । अस्य चात्मरचार्थत्वात् । अतः कृत्वोत्तरतंत्रं (Cod. °त्तरंत्रं) निशाप्रतिपालनं । स्राक्त्यविकारः । स्राक्त्यमणिः स्राक्त्यस्तिलकः (cf. Kāuç. 8. 15) । कृत्याशमनार्थं. — [15] Ch E पिशाङ्ग°. — [16] D (schol.) सभ्याग्नेः (Cod. °ग्रेः) पूर्वस्मिन्देशे कृष्णपिङ्गलवर्णां गां वृषभं कारयति । अन्येन मारयति. — [17] D (schol.) रक्तवर्णच्छागं पश्चिमदेशे (Cod. °शं) कारयति. —

यूषपिशितार्थम्[1] । ४ । मन्त्रोक्ताः[2] । ५ । वाशाकाम्पील-
सितीवारसदंपुष्पा[3, 4, 5] अवधाय[6] । ६ । दूष्या दूषिरसि ये
पुरस्तादीशानां त्वा समं ज्योतिरुतो अस्यवन्धुकृत्सुपर्णस्त्वा
यां ते चक्रुरयं प्रतिसरो यां कल्पयन्तीति[7] महाशान्ति-
मावपते[8] । ७ । निश्यवमुच्योष्णीष्यग्रतः[9, 10] प्रोक्षन्व्रज-
ति[11] । ८ । यतायै यतायै[12] शान्तायै शान्तिवायै भद्रायै
भद्रावति स्योनायै शग्मायै[13] शिवायै सुमङ्गलि प्रजाव-
ति सूसीमे[14] ऽहं वामाभूरिति[15] । ९ । अभावादपविध्य-

---

[1] D (schol.) यूपार्थं गां पिशितार्थं । अजघेपो (! for °यूपो?) रसकाः । — [2] D
पिशितानि मांसानि । न चानयोर्वशाधर्मात्यूपपिशितार्थत्वात् (!). — [2] D
(schol.) या मंत्रे उक्ताः । ओषधयः कास्ता आह । दभोपमार्ग (! cf. Kāuç.
8. 16) सह पाठा (!) आमपात्राद्यन्न भवंति. — [3] D (schol.) वाशा आ-
टरूषकः; cf. Kāuç. 8. 16. — [4] K Bh Ch (sec. man.) शितो°; Bū शिति°;
D (text) सिता°; D (schol.) सितीवार अपामार्ग(:)सदृशो महान्. —
[5] The reading सदंपुष्पा अवधाय is conjectural; E Bū Bi Ch D (text)
सदंपुष्पामव°; K P Bh °पुष्पम्°; D (schol.) सदंपुष्पा त्रिसंध्या (cf. Kāuç.
28. 7). — [6] D (schol.) मंत्रोक्तादीनां क्रमोत्तरमवधानमावायनं संयो-
गात्. — [7] ii. 11. 1; iv. 40. 1; 17. 1; 18. 1; 19. 1; v. 14. 1; 31, 1;
viii. 5. 1; x. 1. 1; to this list corresponds the second gaṇa of the
gaṇamālā (Ath. Pariç. 34. 2), दूष्या दूषिरसीशानां त्वा समं ज्योति-
रुतो अस्यवन्धुकृद्ये पुरस्तात्सुपर्णस्त्वा यां ते चक्रुः प्रतीचीनफलो यद्दुष्कृ-
तमयं प्रतिसरो यां कल्पयन्तीति कृत्याप्रतिहरणानि॥ इति कृत्यागणः॥२॥.
The pratīkas are: ii. 11. 1; iv. 17. 1; 18. 1; 19. 1; 40. 1; v. 14. 1;
31. 1; vii. 65. 1, 2; viii. 5. 1; x. 1. 1. — [8] D (schol.) महशांतिः कथि-
ताः (! see Kāuç. 9. 6, note) एतानि प्रतीकानि आवपतो महाशान्ति(:)
चेति च लोपार्थगति(!?). — [9] K Bū उपमुच्य; so also Dārila to Kāuç.
46. 8; Bi अपमुच्य; D (schol.) रात्रावविमुच्योपानहौ इति पृथिव्या घोरा-
णामंतं (Cod. घोराणांमंत) भवति । अत्र सर्वा कृत्या न्यासश्चात्र परिकरणे
विहितं तया उपयोगार्थः. — [10] D (schol.) उष्णीषं शिरोवेष्टनं । तस्यास्ति
कर्तुः अग्रतः(!). — [11] D (text) प्रोच्यन्. — [12] K Bū Bh D (text)
पतायै (bis). — [13] Bū शक्मायै. — [14] MSS. सुशीमे; cf. Kāuç. 24. 14 and
76. 23. — [15] D (schol.) पतायै पतायै (!) शान्तायै इत्यादय इति क-
रणपर्यंत(!); cf. Kāuç. 46. 7, note. —

ति[1] । १० । कृत्ययामित्रचक्षुषा समीक्षन्कृतव्यधनीत्यवलिप्तं[2] कृत्यया[3] विध्यति[4] । ११ । उक्तावलेखनीम्[5] । १२ । दूष्या दूषिरसीति[6] दर्व्या त्रिः सारूपवत्सेनापोदकेन मथितेन गुल्फान्परिषिञ्चति[7] । १३ । शकलेनावसिच्य यूषपिशितान्याशयति[8] । १४ । यष्टिभिश्चर्म पिनह्य प्रैषकृत्परिक्रम्य बन्धान्मुञ्चति संदंशेन[9] । १५ । अन्यत्पार्श्वौ[10] संवेशयति[11] । १६ । शकलेनोक्तम्[12] । १७ । अभ्यक्तेति[13] नवनीतेन मन्त्रोक्तम् । १८ । दर्भरज्ज्वा संनह्योत्तिष्ठैवेत्युत्था-

---

[1] D (text) अभावेपदविध्यति; D (schol.) कृत्याभावे संस्काराणामपचेपः कृत्याकलगशिक्याव्यभावे (!?) कल्पोक्तानामिह चोक्तानामभावे संस्कारा वच्यमाणा(!). — [2] v. 14. 9. — [3] So all MSS. Is the word to be emended to कृत्याया? cf. the next note. — [4] D (schol.) मित्रचक्षुषा (! for अमित्र°?) समीच(!) उपप्रशान्नायाः (! for °सन्नायाः?) कृत्याया आलिप्तं प्रदेशं आलेपनं ऽपहर्गतप्रसादाशान्तसंभारान्(!)कृत्यया कृतव्यधनीत्यनयर्चा विध्यति दाभ्युषेण (! cf. Kāuç. 32. 8; 35. 28) सांगयेत्येवंविधि(?) उत्तरत्र दर्शनात् । शांतं संभारं कृत्ययामित्रचक्षुषा समीचन् भूमस्थितया (! Cod. भूव°) यदि पुनरालिप्ता (Cod. °रलिप्ता) भावः स्तत्र(!). — [5] D (text) °लेखनो; D (schol.) आलिप्तभावे(!) कथितां (cf. Kāuç. 35. 28) प्रकृति (!) कृत्यया. — [6] ii. 11. 1. — [7] D (schol.) ऋगेका विधिकर्मत्वात् । कर्मत्वं तिलदर्व्या साख्पवत्सेनानुदकेन तत्र क्रमेण त्रिः परिपिंचति । कृत्यागुल्फान् बहुवचनं । प्रतिपाद गुल्फद्विवचनात्. — [8] D (schol) सूक्तेन शकलेन त्रिः शांत्युदकेन कृत्यावसिच्य (!) यूपं पिशितानि चाशयति मुखे प्रचेपार्थमाशयतिवचनं यूषपिशिताश(!)न संपाता दूष्या दूषिरसीति (ii. 11. 1) सूक्तेनास्य प्रकरणात् । अश्नातिश्च प्रयोगात्. — [9] E joins this word to the next sūtra; D (schol.) परिक्रम्य बंधदेशं गत्वा... आयसेन संदंशेन (Cod. सदनेन) कृत्याया बन्धान्मुंचति प्रैषकृत् हस्तेन. — [10] Ch °पार्ष्णौ; E K Bü °पार्श्वौ. — [11] K Bü Bh P संवेशयंति; D (schol.) तस्मिंश्चर्मणि कृत्यामधोमुखीं (Cod. °खी) संवेशयति । प्रैषकृत्. — [12] D (schol.) शकलेनावसिच्य यूषपिशितान्याशयतीत्येतदुक्तं (cf. sū. 14) उत्तानीं कृत्यावसेकस्य ततो दृष्टत्वात् । उक्तवचनस्यैवमर्थत्वात् । शयनसंयोगाच्च. — [13] x. 1. 25; D (schol.) अभ्यक्ताक्तेति मंत्रे यदुक्तं । तच्च नवनीतेन मंत्रोक्तस्मान्नवनीतशकलेन (!) गृहीत्वांजनाभ्यंजने कृत्यायाः कुर्वंति. —

भद्राय कर्णः क्रोशतु भद्रायाक्षि वि वेपताम् ।
परा दुःष्वप्न्यं[1] सुव यद्भद्रं तन्न आ सुव ॥
अक्षिवेपं[2] दुःष्वप्न्यमार्तिं पुरुषरेषिणीम्[3] ।
तदस्मदश्विना युवमप्रिये प्रति मुञ्चतम्[4] ॥
यत्पार्श्वादुरसो मे अङ्गादङ्गादववेपते ।
अश्विना पुष्करस्रजा तस्मान्नः पातमंहस[5]

इति कर्णे क्रोशन्तमनुमन्त्रयते।१। अक्षि वा स्फुरत्[6]।२। वि देवा जरसोत देवा आवतस्त उप प्रियमन्तकाय मृत्यव आ रभस्व प्राणाय नमो विषासहिमित्यभिमन्त्रयते[7,8]।३। ब्राह्मणोक्तमृषिहस्तश्च।४। कर्मणे वां वेषाय वां सुकृताय वामिति[9] पाणी प्रक्षाल्य।५। निर्दुरर्मण्य[10] इति संधाव्या।६। शुद्धा न आप इति[11] निष्ठीव्य जीवाभिराचम्य[12,13]।७। एहि[14] जीवमित्याञ्जनमणिं बध्नाति।८। वाताज्जात[15] इति

---

स्नापयित्वा वपनं करोति । मेखलायज्ञोपवीतदण्डादानं यथोक्तं करोति (Kāuç. 56. 1 fg.) । पुष्पाञ्चिताञ्जलिं पूरयित्वा । मृगारव्रतं अनस्तमिते भोजनं । अधःशयित्वं त्रिषवणं अस्तमिते भोजनं । अक्षीरभोजनं । रोमनखानि धारणं (!) । यथाशास्त्रविहितं etc. (like the वेदव्रत above) । इति मृगारव्रतं ॥ विषासहिव्रतं त्रिरात्रं वा चतूरात्रं ग्रहणं उद्दीक्षणं । मृगारव्रतवत्करोति ॥ यमव्रतं द्वादशरात्रं मृगारवत्करोति । व्रतांते धेनुर्दक्षिणा । ब्रह्मचारी ददाति. —

[1] Ch E P Bi दुष्वप्नं. — [2] K °वेपं. — [3] K Bh °रेषणीं. — [4] K मुञ्चतां. — [5] K B Ch E Bi पातु°. — [6] Ch स्फरत्; E स्फुरत्. — [7] iii. 31. 1; iv. 13. 1; v. 30. 1; vii. 32. 1; viii. 1. 1; 2. 1; xi. 4. 1; xvii. 1-5; cf. the आयुष्यगण, Kāuç. 54. 11, note. — [8] E has a colon here. — [9] VS. i. 6; TS. i. 1. 4. 1; Tāitt. Br. iii. 2. 4. 1; Māitr. S. i. 1. 4; cf. Kāuç. 1. 36. — [10] xvi. 2. 1. — [11] xii. 1. 30. — [12] D (schol.) to Kāuç. 3. 4, जीवा स्थेति चतसृभिः (xix. 69. 1-4). — [13] MSS. °चम्येहि, with Vedic sandhi (Whitney 127, end). — [14] iv. 9. 1. — [15] iv. 10. 1; cf. the Paddhatis, Kāuç. 56. 17, note. —

कृशनम्।९। नव प्राणानिति[1] मन्त्रोक्तम्।१०। घृतादुल्लुप्तमा त्वा चृतत्वृतुभिष्ट्वा मुञ्चामि त्वोत देवा आवतस्त उप प्रियमन्तकाय मृत्यव आ रभस्व प्राणाय नमो विषासहिमित्यभिमन्त्रयते[2] [3]।११। निर्दुरर्मण्य[4] इति सर्वसुरभिचूर्णैररण्ये ऽप्रतीहारं[5] प्रलिम्पति।१२। अथ नामकरणम्[6]।१३। आ[7] रभस्वेमामित्यविछिन्नामुदकधारामालम्भयति[8, 9]।१४। पूतुदारु[10] वध्नाति[11]।१५। पाययति[12]।१६। यत्ते वास[13] इत्यहतेनोत्तरसिचा प्रच्छादयति[14]।१७। शिवे ते स्तामिति

---

[1] v. 28. 1. — [2] v. 28. 14, 12, 13; iii. 11. 1; iv. 13. 1; vii. 13. 1; v. 30. 1; vii. 32. 1; viii. 1. 1; 2. 1; xi. 4. 1; xvii. 1–5; cf. the आयुष्यगण, Kāuç. 54. 11, note. — [3] Ch °मन्त्रयति. — [4] xvi. 2. 1. — [5] Ch E Bü प्रति°; cf. Kāuç. 28. 13. Or is प्रतीहारं the right reading as in Kāuç. 29. 22? — [6] Daç. Kar. and Ath. Paddh. एकादशे ऽहनि द्वादशे वा त्रयोदशे वा मासि वा प्रथमवदस्य मातुरुपस्थे। तालुनि संपातानानयति दधिमध्वाशयति (Daç. Kar. °शमयति; cf. Kāuç. 10. 17, 18) । शतरात्रं वा नामकरणमुच्यते। यथाकुलधर्मेण वा. — [7] viii. 2. 1; cf. the आयुष्यगण Kāuç. 54. 11, note. — [8] K °वछिनामु°. — [9] Ath. Paddh. and Daç. Kar. आ रभस्वेत्यर्थसूक्तेन माणवकस्य दक्षिणहस्ते °धारां निनयति।. Then follow in the Daç. Kar. verses 1–10 of viii. 2, in full. — [10] K Ch (prim. man.) पूत°; cf. Kāuç. 8. 15. — [11] Daç. Kar. and Ath. Paddh. देवदारुमणिं (Ath. Paddh. शालमणिं) संपात्याभिमंत्र्य निघृष्य वध्नाति. — [12] Daç. Kar. and Ath. Paddh. पाययति। ततः पुण्याहांते नाम करोति। द्व्यक्षरं चतुरक्षरं वा। मन्यसंयुक्तं (! for मनुष्य°?) देवतासंयुक्तं वा। हिरण्यमन्तर्धाय पिता माणवकस्य दक्षिणतस्कर्णे (! for °तः कर्णे ?) नाम कथयति. — [13] viii. 2. 16. — [14] Ath. Paddh. and Daç. Kar. यत्ते वास इत्यृचा यंत्रनिर्मुक्तवस्त्रेण उदग्दशेन आच्छादयति ततः चत्वारि परिदानानि ददाति। शिवे ते स्तामिति द्वाभ्यां (viii. 2. 14, 15; but Daç. Kar. cites in full only viii. 2. 14, 15^ab, dividing the whole into two verses after ते हृदे, at the end of the second line of verse 14) पार्थिवस्येति द्वाभ्यां (ii. 29. 1, 2) मा प्र गामेति द्वाभ्यां (xiii. 1. 59, 60) व्रीहियवौ शमीप्रान्तानि उदकं च। द्यावापृथिवीभ्यां त्वा परिददामि (both MSS. of Ath. Paddh. °ददाति;

कुमारं प्रथमं निर्णयति[1]। १८। शिवौ ते स्तामिति[2] व्रीहियवौ प्राशयति[3]। १९। अह्ने[4] च त्वेत्यहोरात्राभ्यां परिददाति। २०। शरदे त्वेत्यृतुभ्यः[5]। २१। उदस्य केतवो मूर्धाहं विषासहिमित्युद्यन्तमुपतिष्ठते[6, 7]। २२। मध्यंदिने ऽस्तं यन्तं सकृत्पर्यायाभ्याम्। २३। अंहोलिङ्गानामापो भोजनहवींष्युक्तानि[8]। २४। उत्तमासु यन्मातली रथक्रीतमिति[9] सर्वासां द्वितीया। २५। ॥ ९ ॥ ॥ ५८ ॥

---

cf. Kāuç. 54. 14, note; 54. 17)। कुमारस्य मूर्ध्नि ददाति पुनः। शिवौ ते स्तामिति द्वाभ्यां (viii. 2. 18, 19) पार्थिवस्येति द्वाभ्यां मा प्र गामेति द्वाभ्यां व्रीहियवाभ्यां त्वा परिददामि। अह्ने च त्वेत्येकया (viii. 2. 20) पार्थिवस्येति द्वे मा प्रगामेति द्वे अहोरात्राभ्यां त्वा परिददामि। शरदे त्वेकया (viii. 2. 22) पार्थिवस्येति द्वे व्रीहियवौ शमीपत्रिका उदकं च। ऋतुभ्यस्त्वा परिददामि। माणवकस्य मूर्ध्नि ददाति। अभ्यातानाद्युत्तरतन्त्रं।... इति नामकरणं समाप्तं —

[1] viii. 2. 14; Ath. Paddh. and Daç. Kar. अथ चतुर्थे मासि निष्क्रमणमुच्यते। शिवे ते स्तामिति द्वाभ्यां कुमारस्य गृहाद्बहिर्निःक्रामयति। उद्वयं तमसस्परि इत्येकया (vii. 53. 7) आदित्यं निरीक्षते। एवं कुमारस्य पूर्वोक्तानि चत्वारि परिदानानि ददाति (cf. sū. 17, note)। अभ्यातानाद्युत्तरतंत्रं जुहोति। निर्णयनं समाप्तं — [2] viii. 2. 18. — [3] Daç. Kar. and Ath. Paddh. अथ षष्ठे (Ath. Paddh. अष्टमे) मासि अन्नप्राशनमुच्यते। अव्यचसश्च (MSS. अव्यसश्च; xix. 68. 1) इत्याद्यभ्यातानान्तं कृत्वा। भूमे मातरित्येकया (xii. 1. 63) कुमारं भूम्यामुपवेशयति। शिवौ ते स्ताम् etc. आभ्यां (viii. 2. 18, 19) व्रीहियवावभिमंत्र्य निघृष्य पाययति सर्वान्नाद्यं पूरयति। स्रुक्स्रुवं पुस्तकं द्रव्यं ददाति पूर्वोक्तानि चत्वारि परिदानानि ददाति (cf. sū. 17, note, and 20) स्वस्ति न इन्द्रोमिति (!) कुमारमन्नं प्राश्य। अभ्यातानाद्युत्तरतन्त्रं। इत्यन्नप्राशनं समाप्तं. — [4] viii. 2. 20. — [5] viii. 2. 22; for this and the preceding sūtra cf. sū. 17, note. — [6] xiii. 2. 1; xvi. 3. 1; xvii. 1-5. — [7] P °तिष्ठंते. — [8] Cf. Kāuç. 52. 16. For the अंहोलिङ्गगण see Kāuç. 32. 27, note; cf. 52. 16. — [9] xi. 6. 23; cf. the end of the अंहोलिङ्गगण Kāuç. 32. 27, note. —

विश्वे देवा[1] इति विश्वानायुष्कामो यजते[2]। १। उपतिष्ठते। २। इदं जनास[3] इति द्यावापृथिव्यौ पुष्टिकामः। ३। संपत्कामः। ४। इन्द्र जुषस्वेतीन्द्रं[4] बलकामः। ५। इन्द्रमहमिति[5] पण्यकामः[6]। ६। उदेनमुत्तरं नय यो ऽस्मानिन्द्रः सुत्रामेति[7] ग्रामकामः। ७। ग्रामसंपदानामपण्यः[8,9]। ८। यशसं मेन्द्र इति[10] यशस्कामः। ९। मह्यमाप इति[11] व्यचस्कामः। १०। आगछत इति[12] जायाकामः। ११। वृषेन्द्रस्येति[13] वृषकामः। १२। आ त्वाहार्षं ध्रुवा द्यौरिति[14] ध्रौव्यकामः। १३। त्यमू षु त्रातारमा मन्द्रैरिति[15] स्वस्त्ययनकामः। १४। सामास्त्वाग्ने ऽभ्यर्चन्तेत्यग्निं[16] संपत्कामः। १५। पृथिव्यामिति[17] मन्त्रोक्तम्। १६। तदिदास धीती[18] वेतीन्द्राग्नी[19]। १७। यस्येदमा रजो ऽथर्वाणामदितिर्द्यौर्दितेः पुत्राणां बृहस्पते सवितरित्यभ्युदितं[20,21] ब्रह्मचारिणं बोधयति[22]। १८। धाता दधातु प्रजापतिर्जनयत्यन्वद्य नो

---

[1] i. 30. 1; cf. Kāuç. 52. 18. — [2] Dārila, fol. 5ᵃ l. 5, describing the contents of chapter 59, विश्वे देवा इति विश्वानायुःकाम इति काम्यानि. — [3] i. 32. 1. — [4] ii. 5. 1. — [5] iii. 15. 1. — [6] Ch (sec. man.) पुण्य°; cf. Kāuç. 50. 12. — [7] vi. 5. 1; 6. 1; vii. 91. 1. — [8] Ch ग्रामसंपदाम°; E °संपदानाम°. — [9] Cf. Kāuç. 11. 7. — [10] vi. 58. 1; cf. the first वर्चस्यगण, Kāuç. 13. 1, note. — [11] vi. 61. 1. — [12] vi. 82. 1. — [13] vi. 86. 1. — [14] vi. 87. 1; 88. 1. — [15] vii. 85. 1; 86. 1; 117. 1; cf. the स्वस्त्ययनगण, Kāuç. 25. 36, note. — [16] ii. 6. 1; vii. 82. 1. — [17] iv. 39. 1. — [18] v. 2. 1; vii. 1. 1. — [19] E °ग्निं. — [20] vi. 33. 1; vii. 2. 1; 6. 1; 7. 1; 16. 1; for vii. 6. 1, as also for vii. 46. 1 of the next sūtra cf. the पत्नीवंतगण (!), Ath. Pariç. 34. 19: अदितिर्द्यौः सिनीवालि कुहूं देवीमिति (vii. 47. 1) त्रीणि सूक्तानि पत्नीवंतः। इति पत्नीवंतगणः ॥ १९ ॥. Cf. Vāit. sū. 1. 16. — [21] Bi has a colon here. — [22] E Ch (prim. man.) °ते. —

यन्न इन्द्रो ययोरोजसा विष्णोर्नु कमग्नाविष्णू सोमारुद्रा सिनीवालि बृहस्पतिर्नो यत्ते देवा अकृण्वन्पूर्णा पश्चा- प्रजापते ऽभ्यर्चत को अस्या न इति[1] प्रजापतिम् । १९ । अग्न इन्द्रश्चेति[2] मन्त्रोक्तान्सर्वकामः । २० । य ईशे ये भ- क्षयन्त[3] इतीन्द्राग्नी लोककामः ।२१। अन्नं ददाति[4] प्रथमम् ।२२। पशूपाकरणमुत्तमम् । २३ । सवपुरस्ताद्धोमा[5, 6] युंज्यन्ते ।२४। दोषो गायेत्यथर्वाणं[7] समावृत्याश्नाति ।२५। अभयं द्यावापृथिवी श्येनो ऽसीति[8] प्रतिदिशं सप्तर्षीनभ- यकामः । २६ । उत्तरेण[9] दीक्षितस्य वा ब्रह्मचारिणो वा[10] दण्डप्रदानम् । २७ । द्यौश्च म इति[11] द्यावापृथिव्यौ विरि- षन्ति[12] ।२८। यो अग्नाविति[13] रुद्रान्स्वस्त्ययनकामः[14] स्व- स्त्ययनकामः । २९ । ॥ १० ॥ ॥ ५९ ॥

॥ इत्यथर्ववेदे कौशिकसूत्रे सप्तमो ऽध्यायः समाप्तः[15] ॥

---

[1] vii. 17. 1; 19. 1; 20. 1; 24. 1; 25. 1; 26. 1; 29. 1: 46. 1; 51. 1; 73. 1; 80. 1; 80. 3; 82. 1; 103. 1; E has a colon here. — [2] vii. 110. 1. — [3] vii. 110. 1. — [3] ii. 34. 1; 35. 1. — [4] E has a colon here. — [5] K सर्व°; E सर्वं. — [6] Ch °द्धोमाश्चुञ्यन्ते. — [7] vi. 1. 1; cf. Daç. Kar. and Ath. Paddh. to Kāuç. 42. 12, note. — [8] vi. 40. 1; 48. 1; cf. the first अभयगण, Kāuç. 13. 1, note. — [9] vi. 48. 1. — [10] Bi has a colon here. — [11] vi. 53. 1. — [12] So Ch Bū E Bi K (prim. man.); P Bh K (sec. man.) वरिष्यन्निति; cf. Kāuç. 72. 30. — [13] vii. 87. 1. — [14] Ch ends here; E inserts ओं; cf. Kāuç. 25. 36, note. — [15] K P Bh here divide the text into two halves: इति पूर्वार्धः समाप्तः. —

॥ ओं ॥

अग्नीनाधास्यमानः सवान्वा[1] दास्यन्संवत्सरं ब्रह्मौदनिकमग्निं दीपयति । १ । अहोरात्रौ वा । २ । याथाकामी वा । ३ । संवत्सरं तु प्रशस्तम् । ४ । सवाग्निसेनाग्नी तादर्थिकौ निर्मथ्यौ वा भवतः । ५ । औपासनौ[2] चोभौ हि विज्ञायेते[3] । ६ । तस्मिन्देवहेडनेनाज्यं[4] जुहुयात् । ७ । समिधो ऽभ्यादध्यात् । ८ । शकलान्वा । ९ । तस्मिन्यथाकामं सवान्ददात्येकं[5] द्वौ सर्वान्वा । १० । अपि वैकैकमात्माशिषो दातारं वाचयति । ११ । पराशिषो ऽनुमन्त्रणमनिर्दिष्टाशिषश्च[6] । १२ । दातारौ कर्माणि कुरुतः । १३ । तौ यथालिङ्गमनुमन्त्रयते । १४ । उभयलिङ्गैरुभौ पुंलिङ्गैर्दातारं[7] स्त्रीलिङ्गैः पत्नीम् । १५ । उदहृत्संप्रैषवर्जम्[8, 9] । १६ । अथ[10] देवयजनम् । १७ । तद्यत्समं समूलमविदग्धं[11] प्रतिष्ठितं प्रागुदक्प्रवणमाकृतिलोष्टव-

[1] Dārila, fol. 5ᵃ l. 5: अग्नीनाधास्यमानः सवानिति सवाः (Cod. सर्वा इति सर्वाः). — [2] So Cb Bi Bü (prim. man.); K P Bh Bü (sec. man.) उपासनौ. — [3] K विज्ञायते. — [4] D (schol.) to Kāuç. 46. 30, यद्देवा देवहेडनमिति सर्वो ऽनुवाकः (vi. 114. 1 fg.). — [5] MSS. सर्वा. — [6] E has a colon here. — [7] Thus emended; MSS. पुल्लिंगै°. — [8] Bh उदरहृत्सं°. — [9] Cf. sū. 25. — [10] E अथैतद्. — [11] Cb has a colon here. —

ल्मीकेनास्तीर्य दर्भैश्च लोमभिः पशूनाम् । १८ । अग्ने जायस्वेति[1] मन्थन्तावनुमन्त्रयते[2] । १९ । पत्नी मन्त्रं संनमयति । २० । यजमानं च[3] । २१ । कृणुत धूममिति[4] धूमम् । २२ । अग्ने ऽजनिष्ठा इति[5] जातम् । २३ । समिद्धो अग्न इति[6] समिध्यमानम् । २४ । परेहि[7] नारीत्युदहृतं[8] संप्रेष्यत्यनुगुप्तामलंकृताम् । २५ । एमा[9] अगुरित्यायतीमनुमन्त्रयते । २६ । उत्तिष्ठ नारीति[10] पत्नीं संप्रेष्यति[11] । २७ । प्रति कुम्भं गृभायेति[12] प्रतिगृह्णाति । २८ । ऊर्जो भाग इति[13] निदधाति । २९ । इयं महीति[14] चर्मास्तृणाति[15] प्राग्ग्रीवमुत्तरलोम[16] । ३० । पुमान्पुंस इति[17] चर्मारोहयति । ३१ । पत्नी ह्वयमानम्[18] । ३२ । तृतीयस्यामपत्यमन्वाह्वयति[19] । ३३ । ऋषिप्रशिष्टेत्युदपात्रं[20] चर्मणि निदधाति । ३४ । तदापस्पुत्रास इति[21] सापत्यावनुनिपद्येते[22] । ३५ । ॥ १ ॥ ॥ ६० ॥

प्राचींप्राचीमिति[23] मन्त्रोक्तम् । १ । चतसृभिरुदपात्रमनुपरियन्ति[24] । २ । प्रतिदिशं ध्रुवेयं[25] विराडित्युपतिष्ठन्ते । ३ । पितेव पुत्रानित्यवरोह्य[26] भूमिं[27] तेनोदकार्था-

---

[1] xi. 1. 1. — [2] Ch E मन्थन्तामनु°. — [3] च is wanting in K. — [4] xi. 1. 2. — [5] xi. 1. 3. — [6] xi. 1. 4. — [7] xi. 1. 13. — [8] E °दहृतं; Ch °हितं; Bi has a colon here. — [9] xi. 1. 14. — [10] xi. 1. 14[b]. — [11] Ch संप्रेख्यति; E °प्रेन्ह्यति. — [12] xi. 1. 14[d]. — [13] xi. 1. 15. — [14] xi. 1. 8. — [15] E has a colon here. — [16] MSS. प्राग्रोव°. — [17] xii. 3. 1 (iii. 6. 1). — [18] E ह्वयमानं. — [19] तृतीयस्यां sc. ऋचि; xii. 3. 3? — [20] xi. 1. 15[b]. — [21] xii. 3. 4. — [22] So only Bū; K °त्यावनुपद्यते; the rest °नुनिपद्यते. — [23] xii. 3. 7. — [24] xii. 3. 7–10. — [25] xii. 3. 11. — [26] xii. 3. 12. — [27] E has a colon here. —

न्कुर्वन्ति । ४ । पवित्रैः संप्रोक्षन्ते । ५ । दर्भाग्राभ्यां च-मेहविः[1] संप्रोक्षति । ६ । आदिष्टानां सानजानत्यै[2] प्रयच्छ-ति । ७ । तांस्त्रेधा[3] भाग इति[4] व्रीहिराशिषु निदधाति । ८ । तेषां यः पितृणां तं श्राद्धं करोति । ९ । यो मनुष्याणां तं ब्राह्मणान्भोजयति । १० । यो देवानां[5] तमग्ने सह-स्वानिति[6] दक्षिणं जान्वाच्यापराजिताभिमुखः प्रह्वो वा मुष्टिप्रसृताञ्जलिभिः[7, 8] कुम्भ्यां निर्वपति । ११ । कुम्भ्या वा चतुः । १२ । तान्सप्त मेधानिति[9] सापत्यावभिमृ-शतः । १३ । गृह्णामि हस्तमिति[10] मन्त्रोक्तम् । १४ । त्रयो वरा इति[11] त्रीन्वरान्वृणीष्वेति । १५ । अनेन कर्मणा ध्रुवानिति[12] प्रथमं वृणीते । १६ । यावपरौ तावेव[13] पत्नी । १७ । एतौ ग्रावाणावयं ग्रावेत्युलूखल-मुसलं[14] शूर्पं प्रक्षालितं चर्मण्याधाय । १८ । गृहाण[15] ग्रावाणावित्युभयं गृह्णाति । १९ । साकं सजातैरिति[16] व्रीहीनुलूखल आवपति । २० । वनस्पतिरिति[17] मुसल-

---

[1] E has a colon here. — [2] So (सा + अनजानत्यै) K P Bh Ch Bū (prim. man.); Bū (sec. man.) आदिष्टानंशान°; B E आदिष्टानां-शान°. — [3] K P Bh तंस्त्रे°. — [4] xi. 1. 5. — [5] E has a colon here, after इति, and after मुखः. — [6] xi. 1. 6. — [7] E मुष्टिं; Ch (prim. man.) मुष्टिः. — [8] K has a colon here; cf. Kāuç. 67. 26 — [9] xii. 3. 16. — [10] xii. 3. 17^c. — [11] xi. 1. 10^c. — [12] Thus with very doubtful emendation: some verb like आप्नुयाम् or the like must be supplied, if it be correct; K Bū Ch P कर्मणो ध्रुवानिति; Bi कर्मणा ईवानिति; E कर्मणा ध्रुवानोति. Upon the basis of the last Roth suggests, on the margin of E, the emendation कर्मणोऽन्नवानीति, 'may I get to be uppermost through this rite'. — [13] K Ch E Bh तानेव. — [14] xi. 1. 9; xii. 3. 14. — [15] xi. 1. 10. — [16] xi. 1. 7. — [17] xii. 3. 15. —

मुञ्चयति[1] । २१ । निर्भिन्ध्यंशून्याहिं[2] पाप्मानमित्यवहन्ति । २२ । इयं ते धीतिर्वर्षवृद्धमिति[3] शूर्पं गृह्णाति । २३ । ऊर्ध्वं प्रजां विश्वव्यचा[4] इत्युदूहन्तीम्[5] । २४ । परा पुनीहि तुषं पलावानिति[6, 7] निष्पुनतीम्[8] । २५ । पृथग्रूपाणीत्यवक्षिणतीम्[9, 10] । २६ । त्रयो लोका[11] इत्यवक्षीणानभिमृशतः । २७ । पुनरा यन्तु[12] शूर्पमित्युद्वपति । २८ । उपश्वस[13] इत्यपवेवेक्ति । २९ । पृथिवीं त्वा पृथिव्यामिति[14] कुम्भीमालिम्पति[15] । ३० । अग्ने चरुरित्यधिश्रयति[16] । ३१ । अग्निः पचन्निति[17] पर्यादधाति । ३२ । ऋषिप्रशिष्टेत्युदकमपकर्षति[18] । ३३ । शुद्धाः पूताः पूताः पवित्रैरिति[19] पवित्रे अन्तर्धाय।३४।उदकमासिञ्चति।३५। ब्रह्मणा शुद्धाः संख्याता स्तोका[20] इत्यापस्तासु[21] निक्त्वा[22] तण्डुलानावपति । ३६ । उरुः प्रथस्वोद्योधन्तीति[23] श्रपयति । ३७ । प्र यच्छ पर्शुमिति[24] दर्भाहाराय दात्रं

---

[1] Ch उत्स्नयति. — [2] xi. 1. 9[b]; xii. 3. 18. — [3] xi. 1. 11; xii. 3. 19[c]. — [4] xi. 1. 9[d]; xii. 3. 19. — [5] So emended; Bū Bi Ch (sec. man.) °हतीं; Ch (prim. man.) °हन्तीं; K °दूहति; E °द्वहंती; P Bh °दूहती. — [6] K Bū Ch Bi पलावामिति. — [7] xi. 1. 11[c]; xii. 3. 19[d]. — [8] K निष्पुन्नतीं; E °पुनंती; Bi Bh पुनती. — [9] xii. 3. 21. — [10] Ch °चिणती; E °चणंतीं. — [11] xii. 3. 20. — [12] xii. 3. 20[d]. — [13] xi. 1. 12; Ch उप श्वासय (cf. AV. vi. 126. 1). — [14] xii. 3. 22. — [15] Ch Bū (sec. man.) °लिम्पयति. — [16] xi. 1. 16. — [17] xii. 3. 24. — [18] xi. 1. 15[b]. — [19] xi. 1. 17; xii. 3. 25. — [20] xi. 1. 18; xii. 3. 28. — [21] So (इत्यापस्तासु) E only; Ch Bū इत्यायस्तासु; so also D (schol.) to Kāuç. 2. 9; K P Bh Bi इत्यायस्त्वासु. — [22] So emended; K P Bh Bū Bi नीत्का; E नीत्का. — [23] xi. 1. 19; xii. 3. 29. — [24] Ch परशुमिति; xii. 3. 31. Cf. Kāuç. 1. 24; 3. 11. —

प्रयच्छति । ३८ । ओषधीर्दान्तु पर्वन्नित्युपरि[1] पर्वणां लुनाति । ३९ । नवं बर्हिरिति[2] बर्हि स्तृणाति । ४० । उदेहि वेदिं धर्त्ता[3] ध्रियस्वेत्युद्वासयति । ४१ । अभ्यावर्तस्वेति[4] कुम्भीं प्रदक्षिणमावर्तयति[5] । ४२ । वनस्पते स्तीर्णमिति[6] बर्हिषि पात्रीं[7] निदधाति । ४३ । अंसध्रीमित्युपदधाति[8] । ४४ । उप[9] स्तृणीहीत्याज्येनोपस्तृणाति । ४५ । उपास्तरीरित्युपस्तीर्णमनुमन्त्रयते[10, 11] । ४६ । ॥ २ ॥ ॥ ६१ ॥

अदितेर्हस्तां सर्वान्समागा इति[12] मन्त्रोक्तम् । १ । तत उदकमादाय पात्र्यामानयति[13] । २ । दर्व्यां[14] कुम्भ्यां[15] । ३ । दर्विकृते[16] तत्रैव प्रत्यानयति[17] । ४ । दर्व्योत्तममपादाय[18] तत्सुहृद्दक्षिणतो ऽग्नेरुदङ्मुख आसीनो धारयति । ५ । अथोद्धरति । ६ । उद्धृते यदपादाय धारयति तदुत्तरार्ध आदधाति । ७ । अनुत्तराधरताया ओदनस्य यदुत्तरं तदुत्तरमोदन एवौदनः[19] । ८ । षष्ट्यां शरत्स्विति[20] पश्चादग्नेरुपसाद-

---

[1] xii. 3. 31[b]. — [2] xii. 3. 32. — [3] xi. 1. 21; xii. 3. 35. — [4] xi. 1. 22. — [5] Ch E °वर्तते. — [6] xii. 3. 33. — [7] K पाचीन्नि°. — [8] K P Bh Bü (prim. man.) अंसद्रीमि°; xi. 1. 23[c]. — [9] xii. 3. 37. — [10] xii. 3. 38. — [11] Ch °स्तीर्णम°. — [12] xi. 1. 24; xii. 3. 36. — [13] Bi has a colon here; for this and the following five sūtras cf. Kāuç. 68. 18–23. — [14] Thus Ch (sec. man.); Ch (prim. man.) and the remaining MSS. दर्व्यां; cf. Kāuç. 68. 19. — [15] K कुम्भ्यां; cf. Kāuç. 68. 19. — [16] E दर्वि°; Ch °कृत्ते. — [17] Ch E have a colon here. — [18] P °मुपादाय; Bh °मपा°; E व्यादाय. — [19] Ch °दनं (cf. AV. xi. 3. 31); E एवौदन; K P Bh have ॥ here, as at the end of metrical passages; is the passage beginning with यदुत्तरं a half çloka? — [20] xii. 3. 34. —

यति। ९। निधिं निधिपा इति[1] त्रीणि काण्डानि करोति।१०। यद्यज्जायेति[2] मन्त्रोक्तम्।११। सा पत्यावन्वारभते।१२। अन्वारब्धेष्वत ऊर्ध्वं[3] करोति।१३। अग्नी रक्ष इति[4] पर्यग्नि करोति।१४। बभ्रेरध्वर्यो इदं[5] प्रापमित्युपर्यापानं[6] करोति।१५। बभ्रेर्ब्रह्मन्निति[7] ब्रूयादनध्वर्युम्।१६। घृतेन गात्रा सिञ्च सर्पिरिति[8] सर्पिषा विष्यन्दयति[9]।१७। वसोर्या धारा आदित्येभ्यो अङ्गिरोभ्य इति[10] रसैरुपसिञ्चति।१८। प्रियं प्रियाणामित्युत्तरतो[11] ऽग्नेर्धेन्वादीन्यनुमन्त्रयते।१९। तामत्यासरत्प्रथमेति यथोक्तं दोहयित्वोपसिञ्चति[12]।२०।

अत्यासरत्प्रथमा[13] धोक्ष्यमाणा[14] सर्वान्यज्ञान्बिभ्रती वैश्वदेवी।[15]

उप वत्सं सृजत[16] वाश्यते गौर्व्यसृष्ट[17] सुमना हिंकृणोति[18, 19] ॥

---

1 xii. 3. 42. — 2 xii. 3. 39. — 3 K Bü ऊर्ध्व. — 4 xii. 3. 43. — 5 xi. 1. 31; xii. 3. 45. — 6 So K Bü P Ch (prim. man.); Ch (sec. man.) उपर्यानं; Bi उपर्यायानं; E उपर्याप्यायनं; cf. Kāuç. 66. 7. — 7 Modification of xi. 1. 31. — 8 xi. 1. 31$^c$; xii. 3. 45$^c$. — 11 xii. 3. 49. —
9 P Bi विष्पन्दयति. — 10 xii. 3. 41, 44. — 14 So K; the rest धो-
12 E P दोहायित्वो°. — 13 Bü प्रथमो. — 16 Bü E सृजति;
क्षमाणा. — 15 The colon is wanting in K. — 17 K P Bi Bh
Ch (prim. man.) सृजति न; Ch (sec. man.) सृज न. — Ch (prim. man.) सुमनाभिहिं-
व्यसृष्टः. — 18 P Bh Bü (sec. man.) Ch (prim. man.) सुमनाभिहिं-
कृणोति; this perhaps stands for सुमना अभिहिंकृणोति, a reading which goes against the metre, but seems rather more suitable to the sense. Is सुमना हिंकृणोति the product of emendation, arising from the better metrical feeling of the scribe? — 19 The colon is wanting in K. —

बधान वत्समभि धेहि भुञ्जती निज्य[1] गोधुगुप[2] सीद[3] दुग्धि ।
इरामस्मा ओदनं पिन्वमाना कीलालं घृतं मदमन्नभागम् ॥
सा धावतु यमराज्ञः सवत्सा सुदुघां पथा[4] प्रथमेह दत्ता ।
अतूर्णदत्ता[5] प्रथमेदमागन्वत्सेन गां सं सृज विश्वरूपामिति ॥ २१ ॥

इदं मे ज्योतिः समग्नय इति[6] हिरण्यमधिदधाति । २२ । एषा त्वचामित्यमोतं[7] वासो ऽयतः[8] सहिरण्यं निदधाति । २३ । ॥ ३ ॥ ॥ ६२ ॥

यदक्षेष्विति[9] समानवसनौ[10] भवतः । १ । द्वितीयं तत्पापचैलं भवति तन्मनुष्याधमाय दद्यादित्येके । २ । शृतं त्वा हव्यमिति[11] चतुर आर्षेयान्भृग्वङ्गिरोविद उपसादयति । ३ । शुद्धाः पूता इति[12] मन्त्रोक्तम् ।४। पक्वं क्षेत्राद्वर्षं वनुष्वेत्यपकर्षति[13] । ५ । अग्नौ तुषानिति[14] तुषानावपति । ६ । परः कम्बूकानिति[15] सव्येन पादेन फलीकरणानपो-

---

[1] E निब्ये; Bū नित्य. — [2] Bū गोमधुगुप. [3] K सेद. — [4] E यथा; Ch (sec. man.) पथां; Ch (prim. et tert. man.) as above; so also the remaining MSS. — [5] Bi अकृष्टदत्वा or °दन्वा. — [6] xi. 1. 28; xii. 3. 50. — [7] xii. 3. 51. — [8] K Bh अयतः. — [9] xii. 3. 52. — [10] K समानवत्सनी. — [11] xi. 1. 25. — [12] xi. 1. 27. — [13] xi. 1. 28[b]; xii. 3. 53. — [14] xi. 1 29. — [15] xi. 1. 29[b].

हृति[1]। ७। तन्वं स्वर्ग[2] इत्यन्यानावपति[3]। ८। अग्ने प्रेहि समाचिनुष्वेत्याज्यं[4] जुहुयात्। ९। एष सवानां संस्कारः। १०। अर्थलुप्तानि निवर्तन्ते। ११। यथासवं[5] मन्त्रं संनमयति। १२। लिङ्गं[6] परिहितस्य लिङ्गस्यानन्तरं कर्मकर्मानुपूर्वेण लिङ्गं परीक्षेत[7]। १३। लिङ्गेन वा[8]। १४। कर्मोत्पत्त्यानुपूर्वं[9, 10] प्रशस्तम्[11]। १५। अतथोत्पत्तेर्यथालिङ्गम्। १६। समुच्चयस्तुल्यार्थानां[12] विकल्पो वा। १७। अथैतयोर्विभागः। १८। सूक्तेन[13] पूर्वं संपातवन्तं करोति। १९। आम्यत[14] इतिप्रभृतिभिर्वा सूक्तेनाभिमन्त्र्याभिनिगद्य[15] दद्याद्दाता वाच्यमानः। २०। अनुवाकेनोत्तरं[16] संपातवन्तं करोति। २१। प्राच्यै त्वा दिश[17] इतिप्रभृतिभिर्वानुवाकेनाभिमन्त्र्याभिनिगद्य दद्याद्दाता वाच्यमानः। २२। यथासवमन्यान्पृथग्वेति[18] प्रकृतिः। २३। सर्वे[19] यथोत्पत्त्याचार्याणां[20] पञ्चौदनवर्जम्। २४। प्रयुक्तानां पुनरप्रयोगम्[21]। २५। एके सहिरण्यां[22] धेनुं[23] दक्षिणां[24]। २६। गो-

---

[1] K P Bh °हृयति. — [2] xii. 3. 54. — [3] K दूति तन्वान°; Bi Ch (sec. man.) दृत्यन्वान°. — [4] iv. 14. 5; xi. 1. 36. — [5] K Ch यथासव. — [6] Ch लिङ्ग. — [7] Bi has a colon here. — [8] This word is wanting in K. — [9] K कर्मोत्यत्या°; Bi °त्पत्या° — [10] K °पूर्वे; Bh °पूर्व्वे. — [11] Ch (prim. man.) प्रशस्तमम°. — [12] Thus emended; Ch समुच्चयः; the rest समुच्चय. — [13] xi. 1. 1 — xi. i. 37? — [14] xi. 1. 30 fg. — [15] Bū °भिगद्य. — [16] xiii. 3. 1 — xiii. 3. 60? — [17] xii. 3. 55 fg. — [18] K पृथक्केति; Bh पृथग्वे°. — [19] K सर्वे; Bi has a colon here. — [20] MSS. यथोत्पत्या°. — [21] Bi पुनः प्रयोगम्. — [22] Bi सहिरण्या. — [23] K Bi धेनुर्द°. — [24] K Bi दक्षिणांन्गो°; Bū °णान्गो°. —

दक्षिणां[1] वा कौरुपथिः । २७ । संपातवतो[2] ऽभिमन्त्र्याभिनिगद्य दद्याद्दाता वाच्यमानः । २८ । एतं भागमेतं सधस्था उलूखल इति[3] संस्थितहोमाः । २९ । आवपते । ३० । अनुमन्त्रणं च[4] । ३१ । ॥ ४ ॥ ॥ ६३ ॥

आशानामिति[5] चतुःशरावम् । १ । यद्राजान[6] इत्यवेक्षति[7] । २ । पदस्तातस्य पृथक्पादेष्वपूपान्निदधाति[8] । ३ । नाभ्यां पञ्चमम् । ४ । उन्नह्यन्वसनेन[9] सहिरण्यं[10] संपातवन्तम् । ५ । आ[11] नयैतमित्यपराजितादजमानीयमानमनुमन्त्रयते । ६ । इन्द्राय[12] भागमित्यग्निं परिणीयमानम् । ७ । ये नो द्विषन्तीति[13] संज्ञप्यमानम् । ८ । प्र पद इति[14] पदः प्रक्षालयन्तम् । ९ । अनु छ्य श्यामेनेति[15] यथापरु[16] विशसन्तम्[17] । १० । ऋचा[18] कुम्भीमित्यधिश्रयन्तम् । ११ । आ[19] सिञ्चेत्यासिञ्चन्तम् । १२ । अव[20] धेहीत्यवदधतम् । १३ । पर्याधत्तेति[21] पर्यादधतम् । १४ । मृतो[22] गच्छत्वित्युद्वासयन्तम् । १५ । उत्क्रामात इति[23]

---

[1] K Bh °दक्षिणान्वा. — [2] Ch Bü °वन्तो. — [3] vi. 122. 1; 123. 1; x. 9. 26. — [4] Ch वा. — [5] i. 31. 1. — [6] iii. 29. 1. — [7] Bü Bi इत्यवेः क्षति; E इत्यविमीक्षते; cf. iii. 29. 1 fg., and the Anukramaṇī to the hymn (अविर्देवत्यम् . . . उद्दालको ऽनेन . . . शितिपादमविमस्तौत्). — [8] P Bh पृथक्पादेष्व°. — [9] Bü पंचमनुनह्यं; K पचमुन्नुनह्यं; the rest पंचममुन्नह्यं. — [10] P सहिरण्यसने or °सेने. — [11] ix. 5. 1. — [12] ix. 5. 2. — [13] ix. 5. 2ᶜ. — [14] ix. 5. 3. — [15] ix. 5. 4. — [16] Ch (prim. man.) °परु. — [17] Ch E °शंसन्तं. — [18] ix. 5. 5. — [19] ix. 5. 5ᵇ. — [20] Part of ix. 5. 5.ᵇ. — [21] Ch पर्याधत्त इति; ix. 5. 5ᶜ. — [22] ix. 5. 5ᵈ. — [23] ix. 5. 6. —

पश्चादग्नेर्दर्भेषूद्धरन्तम् । १६ । उद्धृतमजमनज्मीत्याज्येना-नक्ति[1] । १७ । पञ्चौदनमिति[2] मन्त्रोक्तम् । १८ । ओदना-न्पृथक्पादेषु निदधाति । १९ । मध्ये पञ्चमम् । २० । दक्षिणं पश्चार्धं यूपेनोपसिच्य[3,4] । २१ । शृतमजमित्यनुबद्धशिरः-पादं[5,6] त्वेतस्य चर्म । २२ । अजो हीति[7] सूक्तेन संपात-वन्तं यथोक्तम् । २३ । उत्तरो[8] ऽस्मोतं तस्यायतः सहि-रण्यं निदधाति । २४ । पञ्च रुक्मेति[9] मन्त्रोक्तम् । २५ । धेन्वादीन्युत्तरतः[10] सोपधानमास्तरणं वासो हिरण्यं च । २६ । आ नयैतमिति[11] सूक्तेन संपातवन्तम् । २७ । आञ्जनान्तं[12] शतौदनायाः पञ्चौदनेन व्याख्यातम् । २८ । ॥ ५ ॥ ६४ ॥

अघायतामित्यत्र[13] मुखमपिनह्यमानमनुमन्त्रयते । १ । सपत्नेषु वज्रं ग्रावा त्वेष इति[14] निपतन्तम् । २ । वेदिष्ट इति[15] मन्त्रोक्तमास्तृणाति । ३ । विंशत्योदनासु श्रयणीषु[16] शतमवदानानि वध्रीसंनद्धानि[17] पृथगोदनेषूपर्यादधाति[18] । ४ । मध्यमायाः प्रथमे रन्ध्रिण्यामिक्षां[19] दशमे ऽभितः[20]

---

[1] K °मनय्मी°; iv. 14. 6. — [2] iv. 14. 7. — [3] K Ch यूपेणो°; Bh पूपेनो°. — [4] Bi has a colon here. — [5] iv. 14. 9. — [6] K Bū Bh °शिरस्पादं; cf. Kāuç. 24. 10; 81. 28. — [7] iv. 14. 1 (ix. 5. 13). — [8] K inserts उत्तमम् between this and the preceding word Is it a gloss? Cf. Kāuç. 62. 23. — [9] ix. 5. 25 (26). — [10] Cf. Kāuç. 62. 19. — [11] ix. 5. 1. — [12] Bū (sec. man.) आंजनानांतं; the performances ending with sū. 17. — [13] x. 9. 1. — [14] x. 9. $1^b$, $2^d$. — [15] x. 9. 2. — [16] So K Bi Bh (sec. man.); Ch अपणीषु; Bū (prim. man.) श्रिणीषु; E P Bh श्रेणीषु. — [17] So emended; Bū Bh वद्ध्री°; the rest वध्रि°. — [18] K पृथगोदने पर्या°. — [19] P °ण्यमिचां; Bi °ण्यमिच्यां; E °ण्याभिचां. — [20] K दशभितः. —

सप्रसप्तापूपान्परिश्रयति । ५ । पञ्चदशे[1] पुरोडाशौ । ६ । अग्ने हिरण्यम् । ७ । अपो देवीरित्यग्रत[2] उदकुम्भान् । ८ । बालास्त इति[3] सूक्तेन संपातवतीम् । ९ । प्रदक्षिणमग्निमनुपरिणीयोपवेशनप्रक्षालनाचमनमुक्तम्[4] । १० । पाणावुदकमानीय । ११ । अथामुष्यौदनस्यावदानानां[5] च मध्यात्पूर्वार्धाच्च द्विरवदायोपरिष्टादुदकेनाभिघार्य जुहोति सोमेन पूतो जठरे सीद ब्रह्मणामार्षेयेषु नि दध[6] ओदन त्वेति[7] । १२ । अथ प्राश्नाति । १३ । अग्नेष्ट्वास्येन प्राश्नामि बृहस्पतेर्मुखेन । इन्द्रस्य त्वा जठरे सादयामि वरुणस्योदरे[8] । तद्यथा हुतमिष्टं प्राश्नीयाद्देवात्मा त्वा[9] प्राश्नाम्यात्मास्यात्मन्नात्मानं मे मा हिंसीरिति प्राशितमनुमन्त्रयते । १४ ।

यो ऽग्निर्नृमणा[10] नाम ब्राह्मणेषु प्रविष्टः ।
तस्मिन्म एष[11] सुहुतो ऽस्त्वोदनः स मा मा हिंसीत्परमे व्योमन्[12] ॥

सो अस्मभ्यमस्तु परमे[13] व्योमन्निति दातारं वाचयति । १५ । वीक्षणान्तं शतौदनायाः प्रातर्जपेन व्याख्यातम् । १६ । ॥ ६ ॥ ॥ ६५ ॥

---

[1] Bū °दश; Ch (prim. man.) °दशेषु. — [2] x. 9. 27 (i. 4. 3). — [3] x. 9. 3. — [4] Bū Bh °चमनयुक्तम्. — [5] MSS. °मुष्योदनस्या°. — [6] Ch दधत. — [7] xi. 1. 25[c], 33[a]. — [8] Cf. up to this point VS. (Kāṇva-çākhā) ii. 3. 5, 7 (p. 58 of Weber's edition); Kāty. Çr. ii. 2. 20. — [9] Thus emended; P Bh Bū देवात्मा (without त्वा); K Ch E Bi देवा त्वा. — [10] K नृम्णा. —[11] Ch एतत्सु°; Bū एत. — [12] The colon here only in Bū. — [13] The passage from परमे in the preceding line up to this word is omitted in K. —

वाङ्म आसन्निति[1] मन्त्रोक्तान्यभिमन्त्रयते[2] । १ । वृहता मनो द्यौश्च मे पुनर्मैत्विन्द्रियमिति[3] प्रतिमन्त्रयते[4]।२। प्रतिमन्त्रिते व्यवदायाश्नन्ति । ३ । शतौदनायां द्वादशं शतं दक्षिणाः[5]। ४ । अधिकं ददतः[6] कामप्रं[7] संपद्यते । ५ । ब्रह्मास्येत्योदने[8] हृदान्प्रतिदिशं[9] करोति । ६ । उपर्योपानम्[10] । ७ । तदभितश्चतस्रो[11] दिश्याः कुल्याः । ८ । ता रसैः[13] पूरयति। ९। पृथिव्यां[13] सुरयाद्भिराण्डीकादिवन्ति[14,15] मन्त्रोक्तानि प्रतिदिशं निधाय । १० । यमोदनमित्यतिमृत्युम्[16,17] । ११ । अनड्वानित्यनड्वाहम्[18] । १२ । सूर्यस्य रश्मीनिति[19] कर्कीं[20] साम्नूबन्ध्यां[21] ददाति । १३ । आयं गौः पृश्निरयं सहस्रमिति[22] पृश्निं[23] गाम् । १४ । देवा इमं

---

[1] MSS. वास्यन्निति (as in the Atharvan-MSS.); xix. 60. 1. — [2] K मंत्रोक्त्यभिमंत्रयते; Bū E Bi °भिमृशते. — [3] v. 10. 8; vi. 53. 1 (et al.); vii. 67. 1. — [4] For this and the next sūtra cf. Kāuç. 68. 33, 34. — [5] So, दक्षिणा (अधिकं), all MSS. except Ch (sec. man.): दक्षिणाधिकं. — [6] E ददत्तः. — [7] K E कामः प्र; P Bi Bh कामप्रः; cf. x. 9. 4. — [8] iv. 34. 1. — [9] K E P हृदान्. — [10] Cf. Kāuç. 62. 14. — [11] Ch E तदभृतश्च°; K तदभितश्च तिस्रो. — [12] P कुल्यासारसी. — [13] E Ch (sec. man.) पृथिव्या. — [14] K Ch E P Bi सुराया°. — [15] °राण्डीकादिवन्ति is a doubtful conjecture; K Bū (prim. man.) °रांडीकादिवत्य; Bū (sec. man.) °हांडी° (!); Ch (sec. man.) °रांडीकांदिवत्य; Ch (prim. man.) °रांडिकांदिवत्य; E°रांडिकांदिवत्य; P°रंडिकादिवन्य; Bh°रंडीकादिवत्य; Bi रांडिकादिवत्य; or is an emendation to °वत्यां (sc. पृथिव्यां) to be preferred? Cf. iv. 34. 5. — [16] iv. 35. 1. — [17] P Bh °त्यातिमृत्युम्. — [18] iv. 11. 1. — [19] iv. 38. 5. — [20] E P कर्कां; Bi कक्कों; Ch कक्कों; Bū कर्क्कों. — [21] So K Bh; P Bi सानूबन्ध्यां; Bū सानुबध्यां; Ch E and Pet. Lex. sub कर्क read सानी यन्ध्यां; cf. also Kāuç. 21. 11. — [22] vi. 31. 1; vii. 22. 1. — [23] E Bh Ch (sec. man.) पृश्नि°. —

मधुना संयुतं यवमिति[1] पौनःशिलं[2] मधुमन्थं सहिरण्यं संपातवन्तम् । १५ । पुनन्तु मा देवजना इति[3] पवित्रं कृशरम्[4] । १६ । कः[5] पृश्निमित्युर्वराम् । १७ । साहस्र[6] इत्यृषभम् । १८ । प्रजापतिश्चेत्यनड्वाहम्[7] । १९ । नमस्ते जायमानायै ददामीति[8] वशामुदपात्रेण संपातवता संप्रोक्ष्याभिमन्त्र्याभिनिगद्य दद्याद्दाता वाच्यमानः । २० । भूमिष्ट्वेत्येनां[9] प्रतिगृह्णाति । २१ । उपमितामिति[10] यच्छालया सह दास्यन्भवति तदन्तर्भवत्यपिहितम् । २२ । मन्त्रोक्तं तु[11] प्रशस्तम् । २३ । इटस्य ते वि चृतामीति[12] द्वारमवसारयति । २४ । प्रतीचीं त्वा प्रतीचीन[13] इत्युदपात्रमग्निमादाय प्रपद्यन्ते । २५ । तदन्तरेव सूक्तेन संपातवत्करोति । २६ । उदपात्रेण संपातवता शालां संप्रोक्ष्याभिमन्त्र्याभिनिगद्य दद्याद्दाता वाच्यमानः । २७ । अन्तरा द्यां च पृथिवीं चेत्येनां[14] प्रतिगृह्णाति । २८ । उपमितामिति[15] मन्त्रोक्तानि प्रचृतति । २९ । मा नः पाशमित्यभिमन्त्र्य[16] धारयति । ३० । नास्यास्थीनीति[17] यथोक्तम् । ३१ । सर्वमेनं समादायेत्यद्भिः[18] पूर्णे गर्ते प्रविध्य[19] संवपति । ३२ । शतौदनां[20] च । ३३ । ॥ ७ ॥ ॥ ६६ ॥

---

[1] vi 30. 1. — [2] K Bi पौन°. — [3] vi. 19. 1. — [4] K Bh Cb (sec. man.) कृसरं; cf. Kāuç. 84. 3. — [5] vii. 104. 1. — [6] ix. 4. 1. — [7] ix. 7. 1. — [8] x. 10. 1; xii. 4. 1. — [9] iii. 29. 8 (v. 28. 5). — [10] ix. 3. 1. — [11] This word is wanting in Cb. — [12] ix. 3. 18. — [13] ix. 3. 22. — [14] ix. 3. 15. — [15] ix. 3. 1. — [16] ix. 3. 24. — [17] ix. 5. 23. — [18] ix. 5. 23°. — [19] Cb (prim. man.) प्रवृद्ध. — [20] Cb (prim. man.) शतौदानां; E शतौददनीं. —

संभृतेषु साविकेषु संभारेषु ब्राह्मणमृत्विजं वृणीत। १। ऋषिमार्षेयं सुधातुदक्षिणमनैमित्तिकम्। २। एष ह वा ऋषिरार्षेयः सुधातुदक्षिणो यस्य च्यवराध्याः[1] पूर्वपुरुषा विद्याचरणवृत्तशीलसंपन्नाः। ३। उदगयन इत्येके। ४। अथात ओदनसवानामुपाचारकल्पं[2] व्याख्यास्यामः। ५। सवान्दत्त्वाग्नीनादधीत[3]। ६। सार्ववैदिक[4] इत्येके[5]। ७। सर्वे वेदा द्विकल्पाः[6]। ८। मासपराध्या[7] दीक्षा द्वादशरात्रो[8] वा। ९। त्रिरात्र इत्येके। १०। हविष्यभक्षा[9] स्युर्ब्रह्मचारिणः। ११। अधः शयीरन्। १२। कर्तृदातारावा समापनात्कामं[10] न भुञ्जीरन्संतताश्चेत्स्युः[11]। १३। अहनि समाप्तमित्येके[12]। १४। याचार्थे दातारौ वा दाता केशश्मश्रुरोमनखानि[13] वापयीत। १५। केशवर्जं पत्नी। १६। स्नातावहतवसनौ सुरभिणौ व्रतवन्तौ कर्मण्यावुपवसतः[14]। १७। श्वो भूते यज्ञोपवीती शान्त्युदकं कृत्वा यज्ञवास्तु च[15] संप्रोक्ष्य ब्रह्मौदनिकमग्निं मथित्वा। १८। यद्देवा

---

[1] Ch त्रिवराध्याः; K च्यवराध्याः. — [2] For the variant °पचार° see Kāuç. 140. 1. — [3] D (schol.) in the introduction fol. 7ª l. 4, अथ सवान्दत्त्वाग्नीनादधीतेति तस्यां चोदनायामग्नेः संस्कारफलं तदंगत्वात्। ब्रह्मौदनवत्। अनंगभूतानां स्वर्गः। अन्ये मात्रवर्णिकं फलमिच्छंति पुष्टिग्रहणात् — [4] Bi °वैदिकं; Bū (sec. man.) सार्ववैदिक. — [5] Ch brackets the passage beginning with sū. 5 and ending here. — [6] Ch सर्ववेदद्वि°. — [7] Bh माससप°. — [8] Thus emended (cf. Pāṇini ii. 4. 29); P Bh °रात्रि, the rest °रात्री. — [9] E °भत्त्या. — [10] E Ch (prim. man.) समापना. — [11] P सतता°. — [12] K Bh Bū (prim. man.) समाप्त इत्येके. — [13] E °लोम°. — [14] Thus emended; K Ch E °वसथ (श्वो); Bū °वसनः; the rest °वसथः. Cf. Kāuç. 140. 4. — [15] Wanting in K P Bi. —

देवहेडनं यद्विद्वांसो यदविद्वांसो ऽपामित्यमप्रतीत्तमित्येतैस्त्रिभिः[1] सूक्तैरन्वारब्धे दातरि पूर्णहोमं जुहुयात् । १९। पूर्वाह्णे वाह्यतः शान्तवृक्षस्येध्मं प्राञ्चमुपसमाधाय[2,3] । २० । परिसमुह्य पर्युक्ष्य परिस्तीर्य वर्हिरुदपात्रमुपसाद्य परिचरणेनाज्यं परिचर्य । २१ । नित्यान्पुरस्ताद्धोमान्हुत्वाज्यभागौ च । २२ । पश्चादग्नेः पल्पूलितविहितमौक्षं वानडुहं वा रोहितं चर्म[4] प्राग्ग्रीवमुत्तरलोम[5] परिस्तीर्य ।२३। पवित्रे कुरुते ।२४। दर्भावप्रछिन्नप्रान्तौ प्रक्षाल्यानुलोममनुमार्ष्टि।२५। दक्षिणं जान्वाच्यापराजिताभिमुखः प्रह्वो वा मुष्टिना प्रसृतिनाञ्जलिना यस्यां श्रपयिष्यन्स्यात्तया[6,7] चतुर्थम्[8] । २६ । शरावेण चतुःशरावं देवस्य त्वा सवितुः प्रसव ऋषिभ्यस्त्वार्षेयेभ्यस्त्वैकर्षये त्वा जुष्टं निर्वपामि । २७ । ॥ ८ ॥ ॥ ६७ ॥

वसवस्त्वा गायत्रेण छन्दसा निर्वपन्तु । ऊर्जमक्षितमक्षीयमाणमुपजीव्यासमिति दातारं वाचयति । १ । रुद्रास्त्वा त्रैष्टुभेन छन्दसा । आदित्यास्त्वा जागतेन छन्दसा । विश्वे त्वा देवा आनुष्टुभेन छन्दसा निर्वपन्तु । ऊर्जमक्षितमक्षीयमाणमुपजीव्यासमिति[9] दातारं वाचयति ।२। निरुप्तं सूक्तेनाभिमृशति।३। स्वर्गब्रह्मौदनौ तन्त्रम्।४।

---

[1] vi. 114. 1; 115. 1; 117. 1. — [2] Ch E Bü insert इध्मं after प्राञ्चम्; cf. Kāuç. 53. 3. — [3] E has a colon here. — [4] Bi has a colon here. — [5] K Bh प्राचीव°. — [6] Thus emended; MSS. श्रपयिष्यं. — [7] K Bü स्योत्तमया; Bb स्यात्तमया; Ch स्योत्तया. — [8] Cf. Kāuç. 61. 11. — [9] Cf. Māitr. S. iii. 12. 19; VS. xxiii. 3, also VS. i. 27; v. 2. —

संनिपाते[1] ब्रह्मौदनमितमुदकमासेचयेद्विभागम्[2 & 4] । ५ । यावन्तस्तण्डुलाः[5] स्युर्नावसिञ्चेन्न प्रतिषिञ्चेत् । ६ । यद्यवसिञ्चेन्मयि वर्चो अथो यश इति[6] ब्रह्मा यजमानं वाचयति । ७ । अथ प्रतिषिञ्चेत् । ८ । आ प्यायस्व सं ते पयांसीति द्वाभ्यां[7] प्रतिषिञ्चेत् । ९ ।

आ प्यायस्व समेतु ते विश्वतः सोम वृष्ण्यम् ।
भवा वाजस्य संगथे ॥
सं ते पयांसि समु यन्तु वाजाः सं वृष्ण्यान्यभिमातिषाहः ।
आप्यायमानो अमृताय सोम दिवि श्रवांस्युत्तमानि धिष्वेति । १० ।

तत्र चेदुपाधिमात्रायां नखेन न[8] लवणस्य कुर्यात्तेनैवास्य तद्वृथान्नं संपद्यते । ११ । अहतं वासो दक्षिणत उपशेते । १२ । तत्सहिरण्यम् । १३ । तत्र द्वे उदपात्रे निहिते भवतः । १४ । दक्षिणमन्यदन्तरमन्यत्[9] । १५ । अन्तरं यतोऽधिचरिष्यन्भवति । १६ । बाह्यं जाङ्गायनम्[10] । १७ । तत उदकमादाय पात्र्यामानयति[11] । १८ । दर्व्या[12] कुम्भ्याम्[13] । १९ ।

---

[1] Ch संपाते. — [2] Bü ब्रह्मौदनौ°; E Ch ब्रह्मौदनो°. — [3] Ch °मित उदक°. — [4] P Bi °मासिञ्चयेद्वि°. — [5] So Bü E; the rest तण्डुला. — [6] vi. 69. 3. — [7] RV. i. 91. 16, 18; TS. iii. 2. 5. 3; iv. 2. 7. 4; TB. iii. 5. 12. 1; 7. 13. 4; TĀr. vi. 6. 3; VS. xii. 112, 113; Māitr. S. ii. 7. 14; Kāṭh. S. xvi. 14; Kap. S. xxv. 5; Tāṇḍya Br. i. 5. 8. — [8] Ch E and Pet. Lex. sub उपाधि omit न; Bh त. — [9] Bi °दुत्तरमन्यत्. Is this to be taken into the text? cf. the next sūtra. — [10] K जारमायनम्; cf. Kāuç. 3. 1. — [11] For this and the following four sūtras cf. Kāuç. 62. 2–7. — [12] Thus emended; MSS. दर्वां; cf. Kāuç. 62. 3. — [13] K कुम्भां, as in Kāuç. 62. 3. —

दर्विकृते तत्रैव प्रत्यानयति । २० । दर्व्योत्तममपादाय तत्सुहृद्दक्षिणतो ऽग्नेरुदङ्मुख आसीनो धारयति । २१ । अथोद्धरति । २२ । उद्धृते यदपादाय धारयति तदुत्तरार्ध आधाय रसैरुपसिच्य प्रतिग्रहीत्रे[1] दातोपवहति । २३ । तस्मिन्नन्वारब्धं दातारं वाचयति[2] । २४ । तन्त्वं सूक्तं पच्छः[3] स्नानेन[4] यौ ते पक्षौ यदतिष्ठः । २५ ।

यौ ते पक्षावजरौ पतत्रिणौ याभ्यां रक्षांस्यपहंस्योदन[5] ।
ताभ्यां पप्त्यास्म[6] सुकृतस्य लोकं यत्र ऋषयः प्रथमजाः पुराणाः[7] ॥
यदतिष्ठो दिवस्पृष्ठे व्योमन्नध्योदन[8] ।
अन्वायन्सत्यधर्माणो[9, 10] ब्रह्मणा राधसा सह । २६ ।

क्रमध्वमग्निना नाकं पृष्ठात्पृथिव्या अहमन्तरिक्षमारुहं स्वर्यन्तो नापेक्षन्त उरुः प्रथस्व महता महिम्नेदं मे ज्योतिः सत्याय चेति तिस्रः सममग्रय इति[11] सार्धमेतया । २७ । अत ऊर्ध्वं वाचिते हुते संस्थिते ऽमूं[12] ते ददामी-

---

[1] So emended; MSS. प्रतिगृह्णीत्वे दातो°; cf. Pet. Lex. sub प्रतिगृहीतृ and प्रतिग्रहीतृ. — [2] E has a colon here. — [3] Bū K E Ch Bi पच्छ. — [4] Bi has a colon here. — [5] So emended; MSS. °स्योदनः. — [6] K P Bi Bh पप्त्यास्मत्सु°; VS. and TS. पतेम. — [7] Cf. VS. xviii. 52; TS. iv. 7. 13. 1. — [8] K P Bh °ध्योदनः. — [9] K P Bh Bū अन्वायंत्स°. — [10] Ch E °धर्माणो. — [11] iv. 14. 2, 3, 4; xi. 1. 19, 28; xii. 3. 46–48, 50. — [12] E मुं; Ch (sec. man.) मू. —

ति नामग्राहमुपस्पृशेत् । २८ । सदक्षिणं कामस्तदित्युक्तम्[1] । २९ । ये भक्षयन्त[2] इति पुरस्ताद्धोमाः । ३० ।

अग्ने त्वं नो अन्तम उत त्राता शिवो भवा वरूथ्यः[3] ।
तं त्वा शोचिष्ठ दीदिवः सुम्नाय नूनमीमहे सखिभ्यः[4] ॥
गयस्फानो अमीवहा वसुवित्पुष्टिवर्धनः ।
सुमित्रः सुमनो भवे-[5]

त्याज्यभागौ । ३१ । पाणावुदकमानीयेत्युक्तम् । ३२ । प्रतिमन्त्रणान्तम्[6] । ३३ । प्रतिमन्त्रिते[7] व्यवदायाश्नन्ति । ३४ । इदावत्सरायेति व्रतविसर्जनमाज्यं जुहुयात्[8] । ३५ । समिधो ऽभ्यादध्यात् । ३६ । तत्र श्लोकौ ।

यजुषा मथिते अग्नौ यजुषोपसमाहिते ।
सवान्दत्त्वा[9] सवाग्नेस्तु कथमुत्सर्जनं भवेत् ॥
वाचयित्वा सवान्सर्वान्प्रतिगृह्य[10] यथाविधि ।
हुत्वा संनतिभिस्तत्रोत्सर्गं[11] कौशिको ऽब्रवीत् । ३७ ।

प्राञ्चो[12] ऽपराजितां[13] वा दिशमवभृथाय व्रजन्ति । ३८ । अपां सूक्तैराप्लुत्य[14] प्रदक्षिणमावृत्याप उप-

---

[1] xix. 52. 1. — [2] ii. 35. 1. — [3] RV. v. 24. 1[ab]; SV. i. 448; ii. 457; VS. iii. 25[a]; xv. 48[a]; xxv. 47[a]; TS. i. 5. 6. 2; iv. 4. 4. 8; Māitr. S. i. 5. 3, 10; ii. 13. 8; Kāṭh. S. vii. 1, 8; Kap. S. v. 1. — [4] RV. v. 24. 2[cd]; VS. iii. 26[a]; xv. 48[c]; xxv. 47[c]; TS. Māitr. S. ibid. — [5] RV. i. 91. 12; Māitr. S. iv. 10. 4; 12. 4; Kāṭh. ii. 14; TS. iv. 3. 13. 5, all with the variant सोम नो for सुमनो. — [6] Cf. Kāuç. 66. 2, 3 for this and the following sūtra. — [7] E प्रतिमन्त्रयते. — [8] For this and the following sūtra cf. Kāuç. 42. 15, 16. — [9] K Bū Bh Ch (sec. man.) सवां दत्त्वा. — [10] K Bh सवांत्स°. — [11] K Bb Ch (prim. et tert. man.) insert हि after this word. — [12] Bi प्राचो. — [13] Bi पराजिता. — [14] For the अपां सूक्तानि see Dārila to Kāuç. 7. 14. —

स्पृश्यानवेक्षमाणाः[1] प्रत्युदाव्रजन्ति । ३९ । ब्राह्मणा-न्भक्तेनोपेप्सन्ति । ४० । यथोक्ता दक्षिणा यथोक्ता दक्षिणा । ४१ । ॥ ९ ॥ ॥ ६८ ॥

॥ इत्यथर्ववेदे कौशिकसूत्रेऽष्टमोऽध्यायः समाप्तः ॥

[1] Ch °पेच्यमाणाः; K °वेच्यमाणाः; cf. Kāuç. 7. 14; 140. 18. —

॥ ओं ॥

पिच्यमग्निं शमयिष्यञ्ज्येष्ठस्य[1] चाविभक्तिन[2] एकाग्निमाधास्यन्[3]। १। अमावास्यायां पूर्वस्मिन्नुपशाले गां द्विहायनीं रोहिणीमेकरूपां बन्धयति[4]। २। निशि शामूलपरिहितो[5] ज्येष्ठो ऽन्वालभते। ३। पत्न्यहतवसना ज्येष्ठम्।४। पत्नीमन्वञ्च इतरे[6]। ५। अथैनानभिव्याहारयत्यध्रिगो शमीध्वम्। सुशमि शमीध्वम्। शमीध्वमध्रिगा३उ इति[7][8] चि:[9]। ६। अयमग्निः सत्पतिर्नेडमा रोहेत्यनुवाकं[10] महाशान्तिं च शान्त्युदक आवपते[11]। ७। अग्ने अक्रव्यादिति[12] भ्रष्ट्राह्दीपं[13] धारयति। ८। भूमेश्चोप-

---

[1] Thus emended; MSS. शमयिष्यं; Bi has a colon here. — [2] P Bh वा°. — [3] Dārila, fol. 5ª l. 6, पिच्यमग्निं शमयिष्यन्निति क्रव्याच्छमनं. — [4] E P वधयति. — [5] Thus emended; MSS. सामूल°. — [6] So Bi; Ch E K Bü अन्वंचेतरे; P Bh °न्वचैतरे; cf. the introduction. — [7] K Bi °ध्रिगा श्रो इति; Bü P °ध्रिगा श्रो (or उ) इति; Bh °ध्रिगा उ इति; Ch °ध्रिगा३ओं इति: Nirukta 5. 11 °ध्रिगविति; Āit. Br. and Āçv. Çr. as above. — [8] Bi has a colon here. — [9] The formula occurs: Tāit. Br. iii. 6. 6. 4; Āit. Br. ii. 7; Āçv. Çr. ii. 3. 1; Nirukta 5. 11 (commentary p. 62; introduction p. xxxviii); cf. VS. i. 15; TS. i. 1. 5. 2; Māitr. S. i. 1. 6. — [10] vii. 62. 1; xii. 2. 1 (the अनुवाक beginning with this pratika). — [11] Cf. Kāuç. 39. 7; 43. 5; 46. 7. — [12] xii. 2. 42. — [13] K भ्रष्टादी°; E भ्राष्ट्रादी°; cf. Kāuç. 47. 28; 49. 21. —

दृग्धं समुत्खाय । ९ । आकृतिलोष्टवल्मीकेनास्तीर्य । १० । शकृत्पिण्डेनाभिलिप्य । ११ । सिकताभिः प्रकीर्याभ्युक्ष्य । १२ । लक्षणं कृत्वा । १३ । पुनरभ्युक्ष्य । १४ । पश्चाल्लक्षणस्याभिमन्थनं निधाय । १५ । गोऽश्वाजावीनां पुंसां लोमभिरास्तीर्य व्रीहियवैश्च शकृत्पिण्डमभिविमृज्य प्राञ्चौ दर्भौ निदधाति । १६ । वृषणौ स्थ[1] इत्यभिप्राण्यारण्यौ[2] । १७ । तयोरुपर्यधरारणिम् । १८ । दक्षिणतो मूलान् । १९ । पश्चात्प्रजननमसुर्वश्यसीत्यायुरसीति[3] । २० । मूलत उत्तरारणिमुपसंधाय[4] । २१ । पृतनाजितमित्याहूय[5] । २२ । अभिदक्षिणं ज्येष्ठस्त्रिरभिमन्थत्यों भूर्गायत्रं छन्दोऽनुप्रजायस्व त्रैष्टुभं जागतमानुष्टुभमों भूर्भुवः स्वर्जनदोमिति[6, 7] । २३ । अत ऊर्ध्वं यथाकामम् । २४ । ॥ १ ॥ ॥ ६९ ॥

मन्थामि त्वा जातवेदः सुजातं जातवेदसम् ।
स नो जीवेष्वा भज[8] दीर्घमायुश्च धेहि[9] नः ॥
जातो ऽजनिष्ठा[10] यशसा सहाग्ने[11] प्रजां पशूंस्तेजो रयिमस्मासु धेहि[12] ।

---

[1] VS. v. 2[b]; TS. i. 3. 7. 1; Kāty. Çr. v. 1. 29; Çat. Br. iii. 4. 1. 21. — [2] So E Bi; K °प्राण्यारराणे; Ch P Bü Bh °प्रारण्यारण्यौ. — [3] VS. v. 2[cd]; TS. i. 3. 7. 1; Kāty. Çr. v. 1. 30; Çat. Br. iii. 4. 1. 22. — [4] Ch E have a colon here; K has a double colon in the middle of the word after उत्तरा°. — [5] vii. 63. 1. — [6] K Bh °दोऽमिति. — [7] Cf. VS. v. 2[f], etc.; TS. i. 3. 7. 1; Kāṭh. iii. 4; Lāty. iii. 5. 5; Kāty. Çr. v. 1. 28; Çat. Br. iii. 4. 1. 23. — [8] K Ch भजह्नो° — [9] E देहि. — [10] So K Bi Ch (sec. man.); E Ch (prim. man.) वनिष्वा; P Bh जनिष्टा; Bü वनिष्वा. — [11] K Bü Ch P °ग्नेः. — [12] Cf. Çāṅkh. Çr. ii. 17. 8. —

आनन्दिनो मोदमानाः सुवीरा[1] अनामयाः सर्वमायुर्गमेम ॥

उद्दीप्यस्व जातवेदो ऽव सेदिं[2] तृष्णां[3] क्षुधं जहि ।
अपास्मत्तम उच्छत्वप ह्रीतमुखो[4] जह्यप दुर्हार्दिशो[5] [जहि ॥
इहैवैधि धनसनिरिह त्वा समिधीमहि ।
इहैधि पुष्टिवर्धन इह त्वा समिधीमहीति । १ ।

प्रथमया मन्थति । २ । द्वितीयया जातमनुमन्त्रयते । ३ । तृतीययोद्दीपयति । ४ । चतुर्थ्योपसमादधाति । ५ । यस्त्वा क्रुद्धा[6] इति चो[7] भूर्भुवः स्वर्जनदोमित्यङ्गिरसां त्वा देवानामादित्यानां व्रतेना दधे[8] । द्यौर्मह्नासि[9] भूमिर्भूम्ना[10] तस्यास्ते देव्यदितिरुपस्थे[11] ऽन्नादायान्नपत्याया[12] दधदिति[13] । ६ । लक्षणे प्रतिष्ठाप्योपोत्थाय । ७ । अथोपतिष्ठते । ८ । अग्ने गृहपते सुगृहपतिरहं त्वयाग्ने गृहपतिना भूयासम् । सुगृहपतिस्त्वं मयाग्ने गृहपतिना भूयाः । अस्थूरि णौ गा-

---

1 K Ch (prim. man.) °वीराः. — 2 K P Bb शेदं; B शेदि. — 3 K B धिष्णान्; P धिष्णां; the omission of the word perfects the metre. — 4 E ह्रीत°. — 5 So with doubtful emendation; Ch E दुर्हार्दिशो; Bü दुहर्दिशो; E दुहाद्दिशो; P Bh दुर्हाद्दिशो; K दुर्हार्दशो. — 6 xii. 2. 5; cf. TS. i. 5. 3. 1; Māitr. S. i. 7. 1. — 7 So all MSS. — 8 K Bü Bi ददे; Bi only has the colon. — 9 So emended; K Bü Ch मन्नासि; E P Bi Bh भून्नासि; Māitr. S. i. 6. 1 (end), as above. — 10 So emended according to Māitr. S. (ibid.) and TS. i. 5. 3. 1; MSS. भूमिर्भू°. — 11 So Ch P Bh; K °दितिरुप°; E Bi °दितरुप°; Bü °दित उप° (so also Māitr. S. ibid.). — 12 So E and Māitr. S.; K Bü Ch Bi न्नापत्या; P न्नपतयत्वा; Bh न्नपतयत्या. — 13 Cf. VS. iii. 5; TS. 1. 5. 3. 1; Māitr. S. i. 6. 1 (end), 2. —

र्हपत्यानि दीदिहि शतं समा इति[1] । ९ । व्याकरोमीति[2] गार्हपत्यक्रव्यादौ समीक्षते । १० । शान्तमाज्यं गार्हपत्यायोपनिदधाति । ११ । माषमन्थं[3] क्रव्यादम् । १२ । उप त्वा नमसेति[4] पुरोऽनुवाक्या । १३ । विश्वाहा ते[5] इति पूर्णाहुतिं जुहोति । १४ । यो नो अग्निरिति[6] सह कर्त्रा[7] हृदयान्यभिमृशन्ते । १५ । ॥ २ ॥ ॥ ७० ॥

अंशो राजा विभजतीमावग्नी[8, 9] विधारयन्[10] ।
क्रव्यादं निर्णुदाम्यसि[11] हव्यवाडिह तिष्ठत्विति

विभागं जपति । १ । सुगार्हपत्य इति[12] दक्षिणेन गार्हपत्ये[13] समिधमादधाति । २ । यः क्रव्यात्तमशीशममिति[14] सव्येन नडमयीं क्रव्यादि[15] ।३। अपावृत्येति[16] मन्त्रोक्तं बाह्यतो निधाय । ४ । नडमा रोह समिन्धत इषीकां जरतीं[17] प्रत्यञ्चमर्कमित्युपसमादधाति[18] । ५ । यद्यग्निर्यो अग्निरविः कृष्णा[19]

मा[20] नो रुरोः[21] शुचद्विदः[22] शिवो[23] नो अस्तु भरतो
ररणः ।

---

[1] Cf. RV. vi. 15. 19; VS. ii. 27 (and Kāṇva-çākhā, p. 59 of Weber's edition); TS. 1. 5. 6. 4; Māitr. S. i. 4. 2 (end); i. 15. 14 (end); Çāṅkh. Çr. iv. 12. 14; Çat. Br. i. 9. 3. 19. — [2] xii. 2. 32. — [3] K P Ch (prim. man.) माख°. — [4] iii. 15. 7. — [5] Bū न; Bi °हांत; iii. 15. 8. — [6] xii. 2. 33. — [7] Ch कर्ता; Bū कर्त्ता. — [8] So emended; MSS. °तीमाम°. — [9] Bi °ग्नि. — [10] E Ch (prim. man.) °धरयत. — [11] K P have a colon here. — [12] xii. 2.45[c]. — [13] K P Bh Ch (prim. man.) गाहपत्यं. — [14] Bh °सीसमम्; cf. iii. 21. 9. — [15] These words are wanting in Ch E. — [16] xii. 2. 34. — [17] P Bi जरंतीं; E जरंति. — [18] xii. 2. 1, 11, 51, 55. — [19] xii. 2. 4, 7, 53. — [20] E यां. — [21] So with doubtful emendation; E रुरोह; Ch रुटो; Bi रूरो; the rest रुरो; the word is then to be regarded as an augmentless subjunctive from the reduplicated root रु. — [22] K P have a colon here. — [23] E शिवा. —

अतिव्याधी व्याधो[1] अग्रभीष्ट[2] क्रव्यादो अग्नीञ्छमया-
मि[3,4] सर्वानिति
शुक्त्या माषपिष्टानि[5] जुहोति । ६ । सीसं दर्व्यामवधा-
योद्ग्रथ्य[6] मन्थं जुह्वञ्छमयेत्[7] । ७ । नडमा रोहेति चतस्रो
ऽग्ने अक्रव्यादिमं क्रव्यादो नो अग्नेष्वन्येभ्यस्त्वा हिरण्य-
पाणिमिति[8] शमयति । ८ । दक्षिणतो जरत्कोष्ठे[9] शीतं भ-
स्माभिविहरति[10] । ९ । शान्त्युदकेन सुशान्तं कृत्वावदग्धं
समुत्खाय[11] । १० । परं मृत्यो[12] इत्युत्थापयति । ११ ।
क्रव्यादमिति[13] तिसृभिर्ह्रीयमाणमनुमन्त्रयते[14] । १२ । दी-
पाद्याभिनिगदनात्प्रतिहरणेन व्याख्यातम्[15] । १३ । अविः
कृष्णेति[16] निदधाति ।१४। उत्तमवर्जं[17] ज्येष्ठस्याञ्जलौ सी-
सानि । १५ । अस्मिन्वयं यद्रिप्रं सीसे मृड्ढ्वमित्यभ्यवने-
जयति[18,19] । १६ । कृष्णोर्णया पाणिपादान्निमृज्य[20] ।१७।
इमा जीवा उदीचीनैरिति[21] मन्त्रोक्तम् । १८ । त्रिः सप्ते-

---

1 E व्याधी. — 2 Ch अग्रभिष्ट. — 3 So emended; K अपी शम°; Bh अग्नि शम°; the rest अग्नि शम°. — 4 E शमयासि. — 5 K Bh माख°. — 6 K Bü Bh Ch °ग्रंथ्य. — 7 Bh जुहूंन्; the rest जुहूं. For the irregular form जुह्वन् cf. Kāuç. 109. 5; 110. 4; 111. 5; 126. 9. — 8 xii. 2. 1-4, 42, 43, 15, 16; iii. 21. 8. — 9 P Bü °कोष्टे. — 10 Ch भस्मावि°. — 11 So K P Bh Bü (prim. man.); Bi Bü (sec. man.) समुत्खापयति; E समुत्खातयति; Ch समुत्थापयति or समु-त्खापयति (?). — 12 xii. 2. 21. — 13 xii. 2. 8-10. — 14 Ch (prim. man.) ह्रियं°. — 15 For दीपाद्याभिनिगदनात् cf. Kāuç. 39. 20-27? — 16 xii. 2. 52. — 17 The सीसानि, barring the कृकलासशिरः; cf. Kāuç. 8. 18. — 18 xii. 2. 13, 40, 19; MSS. मृड्ढम्. — 19 E अभ्य-वनयति; the passage beginning here and continued to the end of the kaṇḍikā is repeated with slight modifications at Kāuç. 86. 19 fg. — 20 Bü निर्मृज्य. — 21 xii. 2. 22, 23. —

ति[1] कूद्या पदानि योपयित्वा[2] नदीभ्यः । १९ । मृत्योः पदमिति[3] द्वितीयया नावः । २० । परं मृत्यो इति[4] प्राग्दक्षिणं कूदीं प्रविध्य । २१ । सप्त नदीरूपाणि कारयित्वोदकेन पूरयित्वा । २२ । आ रोहत सवितुर्नावमेतां सुत्रामाणं महीमू ष्विति[5] सहिरण्यां सयवां नावमारोहयति । २३ । अश्मन्वती रीयत उत्तिष्ठता प्र तरता सखाय[6] इत्युदीचस्तारयति । २४ । ॥ ३ ॥ ॥ ७१ ॥

उत्तरतो गर्त उदकप्रस्रवणे[7] ऽश्मानं निदधात्यन्तश्छिन्नम्[8] । १ । तिरो[9] मृत्युमित्यश्मानमतिक्रामति । २ । ता अधरादुदीचीरित्यनुमन्त्रयते[10, 11] । ३ । निस्सालामिति[12] शालानिवेशनं संप्रोक्ष्य[13] । ४ । ऊर्जं बिभ्रदिति[14] प्रपादयति । ५ । वैश्वदेवीमिति[15] वत्सतरीमालम्भयति । ६ । इममिन्द्रमिति[16] वृषम् । ७ । अनड्वाहमहोरात्रे इति[17] तल्पमालम्भयति । ८ । आ[18] रोहतायुरित्यारोहति । ९ । आसीना[19] इत्यासीनामनुमन्त्रयते[20] । १० । पिञ्जूलीराञ्जनं सर्पिषि पर्यस्येमा नारीरिति[21] स्त्रीभ्यः प्रयच्छति । ११ । इमे

---

[1] xii. 2. 29ᶜ. — [2] So emended in accordance with AV. xii. 2. 29ᶜ, 30; Bü लोपयत्वा; K Ch E P B लोपयित्वा; cf. Kāuç. 86. 22. — [3] xii. 2. 30. — [4] xii. 2. 21. — [5] xii. 2. 48ᶜ; vii. 6. 3, 2. — [6] xii. 2. 26, 27. — [7] Bü °प्रश्रस्रवणे. — [8] So Bü; Bi अन्तःछिन्नं; Cb अंन्तछिन्नं; K P Bh अंतछिन्नं; E अनुछिन्नं. — [9] xii. 2. 23ᵈ. — [10] K P Bh °दीचीर्नैरि° (cf. xii. 2. 29). — [11] xii. 2. 41. — [12] ii. 14. 1. — [13] Cb E संप्रोचत्यू(क्षे); K संप्रोच्यो(दर्ज्यं). — [14] vii. 60. 1. — [15] xii. 2. 28. — [16] xii. 2. 47. — [17] xii. 2. 48, 49. — [18] xii. 2. 24. — [19] xii. 2. 30ᶜ. — [20] So all MSS Is the passage to be emended to इत्यासीनामनु°? — [21] xii. 2. 31. —

जीवा अविधवाः सुजामय इति[1] पुंभ्य[2] एकैकस्मै तिस्र-स्तिस्रस्ता[3] अध्यध्युद्धानं[4] परिचृत्य[5] प्रयच्छति । १२ । परं मृत्यो व्याकरोम्या रोहतान्तर्धिः प्रत्यञ्चमर्कं ये अग्नयो नमो देववधेभ्यो ऽग्ने[6] ऽभ्यावर्तिन्नग्ने जातवेदः सह रय्या[7] पुनरूर्जेति[8] । १३ ।

अग्ने ऽभ्यावर्तिन्नभि न आ ववृत्स्व ।[9]
आयुषा वर्चसा सन्या[10] मेधया प्रजया धनेन ॥
अग्ने जातवेदः[11] शतं ते सहस्रं त उपावृतः ।
अधा[12] पुष्टस्येशानः पुनर्नो रयिमा कृधि ॥
सह रय्या नि वर्तस्वाग्ने पिन्वस्व धारया ।
विश्वप्स्न्या विश्वतस्परि ॥
पुनरूर्जा ववृत्स्व[13] पुनरग्न[14] इषायुषा[15] ।
पुनर्नः पाह्यंहसः[16] ॥ १४ ।

---

[1] Cf. xii. 2. 22, 31[a]; the passage seems to be a jagatī-pāda from an unknown source. — [2] Bū E Ch (prim. man.) कुंभ्य. — [3] Ch तिस्रस्तिस्रः स्रस्ता (so also Pet. Lex. sub. चर्त + परि); Bū तिस्तृस्तिस्रस्ता; E तिस्रः स्ति-स्रस्ता; Bh तिस्रः स्तिस्रः स्ता. — [4] So only K; the rest अध्यध्युद्द-धानं; the Pet. Lex., ibid., अध्युद्द्धानं. — [5] Bū E Ch (sec. man.) परिवृत्य. — [6] Ch Bh अग्ने. — [7] Ch (sec. man.) रय्या; E रय्या. — [8] xii. 2. 21, 32, 24 (48), 44, 55; iii. 21. 1; vi. 13. 1; TS. iv. 2. 1. 2, 3; VS. xii. 7-10; Māitr. S. i. 7. 1; ii. 7. 8; Kāṭh. S. xvi. 8; xix. 11; xxii. 12; Lāṭy. iii. 5. 11. — [9] So K B; the rest, as also TS. and VS., omit the colon and the vowels coalesce. — [10] Ch सह्या; Bū संन्या. — [11] The reading of TS. VS. and Māitr. S. (अङ्गिरः) perfects the metre. — [12] Ch अध. — [13] TS. VS. and Māitr. S. read नि वर्तस्व for आ ववृत्स्व. — [14] E पुनरग्य. — [15] E Bū (prim. man.) इषा (omitting °युषा). — [16] K पात्वंहसः. — .

शर्करान्स्वयमातृणाञ्छणरज्जुभ्यां[1] विबध्य धारयति।१५। समया खेन जुहोति[2]।१६। इमं जीवेभ्य इति[3] द्वारे निदधाति।१७। जुहोत्येतयर्चा। आयुर्दावा धनदावा बलदावा पशुदावा पुष्टिदावा प्रजापतये स्वाहेति।१८। षट्संपातं माता पुत्रानाशयते[4]।१९। उच्छिष्टं जायाम्।२०। संवत्सरमग्निं[5] नोद्वायान्न हरेन्नाहरेयुः।२१। द्वादशरात्र इत्येके।२२। दश दक्षिणा।२३। पश्चादग्नेर्वाग्यतः संविशति।२४। अपरेद्युरग्निं चेन्द्राग्नी च यजेत[6]।२५। स्थालीपाकाभ्यामग्निं चाग्नीषोमौ च पौर्णमास्याम्।२६। सायंप्रातर्व्रीहीनावपेद्यवान्वाग्नये स्वाहा प्रजापतये स्वाहेति।२७। सायं सूर्याय स्वाहा प्रजापतये स्वाहेति।२८। प्रातर्द्वादशरात्रे ऽग्निं पशुना यजेत[7]।२९। स्थालीपाकेन[8] वोभयोर्विरिष्यति[9]।३०। संवत्सरतम्यां[10] शान्त्युदकं कृत्वा[11]।३१। घृताहुतिर्नो[12] भवाग्ने[13] अक्रव्याहुतिर्घृताहुतिं त्वा वयमक्रव्याहुतिमुपनिषदेम[14] जातवेद इति चतुर उदपात्रे संपातानानीय।३२। तानुत्सृप्य।३३। पुरस्तादग्नेः प्रत्यङासीनो जुहोति।

---

[1] K Bū Bi E P °तृणां शण°; Bh °तृखां शण°; Ch °तृखान्शण°. — [2] Cf. Kāuç. 15. 4. — [3] xii. 2. 23. — [4] E Bi °ति; P पुत्रान्प्राशयते. — [5] P Bi Bh °ग्नि(नो°). — [6] E यजेत्. — [7] E यजेत्. — [8] Ch E स्थालीपाकेनोभयो°. — [9] So K P Bh Bi; Bū °र्द्विरिष्यति; Ch E °र्वरिष्यति; cf. Kāuç. 59. 28. — [10] E Bū Ch (sec. man.) °तस्यां. — [11] K Bū (prim. man.) omit this word. — [12] Ch E Bū घृताकृतिं नो. — [13] E भवाग्नेयः क्रव्या°. — [14] Ch E °कृतिरुपनिषदेम. —

हुते रमस्व हुतभाग एधि मृडास्मभ्यं मोत हिंसीः प-
शून्न इति[1] । ३४ ।

यद्युद्वायाद्गसनारणिं[2] संस्पृश्य तूष्णीं मथित्वोद्दीप्य । ३५ । पूर्णहोमं हुत्वा । ३६ । संनतिभिराज्यं[3] जुहुयाद्व्याहृतिभिर्वा । ३७ । संसृष्टे चैवं जुहुयात् । ३८ । अग्नावनुगते जायमाने[4] । ३९ । आनडुहेन शकृत्पिण्डेनाग्न्यायतनानि[5] परिलिप्य । ४० । होम्यमुपसाद्य । ४१ । प्राणापानाभ्यां स्वाहा समानव्यानाभ्यां स्वाहोदानरूपाभ्यां स्वाहेत्यात्मन्येव[6] जुहुयात् । ४२ । अथ प्रातरुत्थायाग्निं निर्मथ्य यथास्थानं प्रणीय यथापुरमग्निहोत्रं जुहुयात् । ४३ । सायमाशप्रातराशौ यज्ञावृत्विजौ[7] । ४४ । ॥ ४ ॥ ॥ ७२ ॥

पुरोदयादस्तमयाच्च पावकं प्रबोधयेद्गृहिणी[8] शुद्ध-
हस्ता ।

समतीते संधिवर्णे ऽथ हावयेत्सुसमिद्धे[9] पावक आ-
हुतीषहिः[10, 11] । १ ।

---

[1] Some of the verses cited in full in this chapter, according to Roth, Der Atharva-Veda in Kaschmir, p. 23, are found in the Kashmir-çākhā of the Atharvan. — [2] E °ज्जायाभक्ष°; Ch (prim. man.) °ज्जायाङ्गस्न°. — [3] E For the संनति-verses cf. Kāuç. 5. 8. — [4] K (prim. man.) जायमाने (आनडुहेन); Ch (prim. man.) जयमाना; Ch (sec. man.) जयमान. — [5] So K E Bh; the rest °यतनं — [6] So Bū E; K omits these two words reading °रूपाभ्यां स्वाहेति जुहुयात्; the rest °त्मन्नेव. Cf. Lāty. iv. 11. 12 for the entire passage. — [7] Ch °वृत्तिजौ. — [8] K Ch E P Bh गृहणी. — [9] E हावयेत सु°. — [10] E आऊति°; Bū °सहि. — [11] The passage is metrical, four times twelve syllables. —

अग्नये च प्रजापतये च रात्रावादित्यश्च दिवा प्रजापतिश्च[1]।

उदकं च समिधश्च होमेहोमे पुरो वरम्[2,3]। २।
होम्यैः[4] समिद्भिः पयसा स्थालीपाकेन सर्पिषा।
सायंप्रातर्होम[5] एतेषामेकेनापि सिध्यति[6]। ३।
अभ्युद्धृतो हुतो[7] ऽग्निः प्रमादादुपशाम्यति।
मथिते व्याहृतीर्जुहुयात्पूर्णहोमौ यथर्त्विजौ[8,9]। ४।

वनस्पतिभ्यो वानस्पत्येभ्य ओषधिभ्यो वीरुद्भ्यः सर्वेभ्यो देवेभ्यो देवजनेभ्यः पुण्यजनेभ्य इति[10] प्राचीनं तदुदकं निनीयते। ५। स्वधा प्रपितामहेभ्यः स्वधा पितामहेभ्यः स्वधा पितृभ्य[11] इति दक्षिणतः। ६। तार्क्ष्यायारिष्टनेमये ऽमृतं मह्यमिति पश्चात्। ७। सोमाय सप्तर्षिभ्य इत्युत्तरतः। ८।

परिमृष्टे परिलिप्ते च[12] पर्वणि व्रातपतं हावयेदन्नमग्नौ।
भूयो दत्त्वा[13] स्वयमल्पं च भुक्त्वापराह्णे व्रतमुपैति याज्ञिकम्[14]। ९।

---

[1] Metrical: 12 + 11 syllables. — [2] Bū वरम (! without colon). — [3] Metrical: 8 + 8 syllables. — [4] E हौम्यैः; P हौम्यैः; Bū has a colon after the word. — [5] E °र्होमि. — [6] Metrical: four times eight syllables. — [7] Bū अभ्युद्धृताद्धतो. — [8] So with doubtful emendation; MSS. here and in verse 13, यवृत्विजौ. So also Dārila to Kāuç. 6. 22 (fol. 30[b] l. 3 fg.). Or is यावृत्विजौ the correct reading? Compare furthermore Kāuç. 72. 44. — [9] The first line is metrical: 8 + 8; the second seems to contain one hypercatalectic and one regular pāda of the same metre. — [10] Cf. viii. 8. 14; xi. 9. 24. — [11] P here inserts the word स्वधा. — [12] E च. — [13] MSS. दत्वा. — [14] Metrical: 12, 11, 11. 12.

अनशनं ब्रह्मचर्यं च भूमौ शुचिरग्निमुपशेते[1] सुगन्धिः[2] ।१०।

अग्नीषोमाभ्यां दर्शन इन्द्राग्निभ्यामदर्शने ।
आग्नेयं तु पूर्वं नित्यसन्वाहार्यं प्रजापतेः[3] ।११।
अर्धाहुतिस्तु[4] सौविष्टकृती सर्वेषां हविषां स्मृता ।
आनुमती[5] वा भवति[6] स्थालीपाकेष्वथर्वणाम्[7,8] ।१२।
उभौ च संधिजौ यौ वैश्वदेवौ यथर्त्विजौ[9] ।
वर्जयित्वा सबर्हिषः साज्या[10] यज्ञाः सदक्षिणाः[11,12] ।१३।
यथाशक्ति[13] यथाबलं[14] हुतादो ऽन्ये[15] अहुतादो ऽन्ये[16,17] ।
वैश्वदेवं हविरुभये संचरन्ति[18,19] ।१४।
ते सम्यञ्च इह मादयन्तामिषमूर्जं यजमाना यमिछत[20] ।
विश्वे देवा इदं हविरादित्यासः सपर्यत ।

---

[1] K has a double colon after the syllables शुचिर°. — [2] Metrical: 11, 11. — [3] Metrical: four times eight syllables. — [4] E आर्धहुतिषु; P आर्धहुतिस्तु. — [5] K अनु°. — [6] Bi has a colon here. — [7] E स्थालीपाके ह्य°. — [8] Metrical: anuṣṭubh-pādas; the first is irregular. — [9] So emended hesitatingly; cf. verse 4. Bi धर्त्विजौ; E यवृत्तिजौ; the rest here as also in verse 4, and Dārila to Kāuç. 6 22 यवृत्विजौ. Cf. also Kāuç. 72. 44. — [10] So Bi only; Bū साजा; K E Ch Bh P, and Dārila to Kāuç. 6. 22, साह्या. — [11] D (schol.) to Kāuç. 6. 30 (fol. $32^b$ l. 6) cites the beginning of this verse: अग्निहोत्रवैश्वदेवयोः नाज्येनेति कर्तव्यताविशेषः । उभौ च संधिजाविति प्रतिषेधात्; cf. also Kāuç. 10. 2, note. — [12] Metrical: four anuṣṭubh-pādas. — [13] So emended; MSS. यथाशक्तियं°. — [14] Ch Bi have a colon here. — [15] Ch E न्ने. — [16] Ch E न्ने. — [17] Cf. TS. v. 4. 5. 1; 5. 10. 5; Māitr. S. i. 4. 6; Āit. Br. 7. 19; Gop. Br. ii. 1. 6. — [18] E संचरिष्यंति. — [19] Metrical: the first line, 8, 8; the second would be a pāda of eleven syllables, if the word हविर् is omitted. — [20] K यमिछथ; Bi यमित्सत. —

अस्मिन्यज्ञे मा व्यथिष्यमृताय[1] हविष्कृतम्[2]। १५।
वैश्वदेवस्य हविषः सायंप्रातर्जुहोति।
सायमाशप्रातराशौ[3] यज्ञावेतौ स्मृतावुभौ[4]। १६।
अप्रतिभुक्तौ शुचिकार्यौ[5] च नित्यं वैश्वदेवौ जानता यज्ञश्रेष्ठौ[6]।
नाश्रोत्रियो नानवनिक्तपाणिर्नामन्त्रविज्जुहुयान्नाविपश्चित्[7]। १७।
वीभत्सवः शुचिकामा हि देवा नाश्रद्दधानस्य हविर्जुषन्ते।
ब्राह्मणेन ब्रह्मविदा तु हावयेन्न स्त्रीहुतं शूद्रहुतं च देवगम्[8,9]। १८।
यस्तु विद्यादाज्यभागौ यज्ञान्मन्त्रपरिक्रमान्[10]।
देवताज्ञानमावृत[11] आशिषश्च कर्म स्त्रिया अप्रतिषिद्धमाहुः[12]। १९। ॥ ५ ॥ ॥ ७३ ॥

तयोर्बलिहरणम्। १। अग्नय इन्द्राग्निभ्यां वास्तोष्प-

---

[1] E व्यथिष्यन्नमृताय; B व्यथिष्ठामृताय. — [2] These three lines contain a mantra-citation: triṣṭubh and jagatī-pādas in the first line; anuṣṭubh in the remaining two lines. — [3] Ch has a colon here. — [4] Metrical: eight-syllables; the second pāda catalectic. — [5] So E; the rest शुचिः कार्यौ. — [6] K यज्ञः°. — [7] Four triṣṭubh-pādas, the first hypercatalectic. — [8] So emended; MSS. दैवगं. — [9] Metrical: 11, 11, 12, 12. — [10] Bi °क्रमात्; Ch यज्ञानमन्त्रपरिक्रमात्; E यज्ञान्परिक्रमान्. — [11] P °वृत्त. — [12] Metrical; the first line 8, 8; the second line 11, 11, with crasis of °वृत and आशि° in the first pāda. —

तये प्रजापतये ऽनुमतय इति हुत्वा। २। निष्क्रम्य बहिः[1] प्रचीनं[1] ब्रह्मणे वैश्रवणाय[2] विश्वेभ्यो देवेभ्यः[3] सर्वेभ्यो देवेभ्यो विश्वेभ्यो भूतेभ्यः सर्वेभ्यो भूतेभ्य इति[4.5] बहुशो बलिं[6] हरेत्। ३। द्विः[7] प्रोक्षन्प्रदक्षिणमावृत्यान्तरुपातीत्य द्वारे। ४। द्वार्ययोर्मृत्यवे धर्माधर्माभ्याम्[8]। ५। उदधाने धन्वन्तरये समुद्रायौषधिवनस्पतिभ्यो द्यावापृथिवीभ्यामिति। ६। स्थूणावंशयोर्दिग्भ्यो ऽन्तर्देशेभ्य इति। ७। सक्तिषु वासुकये चित्रसेनाय चित्ररथाय तक्षोपतक्षाभ्यामिति। ८। समन्तमग्नेराशायै श्रद्धायै मेधायै श्रियै ह्रियै विद्याया इति[9]। ९। प्राचीनमग्नेः[10] गृह्याभ्यो[11] देवजामिभ्य इति[13]। १०। भूयो ऽभ्युद्धृत्य[13] ब्राह्मणान्भोजयेत्। ११। तदपि श्लोकौ वदति[14]।

माब्राह्मणायतःकृतमश्नीयाद्विषवदन्नमन्नकाम्या[15.16]।

---

[1] Bi has a colon here. — [2] Ch वैश्वरणाय. — [3] E has a colon here. — [4] Bi has a colon here. — [5] Cf. for this and the following sūtras: Çāñkh. Gṛ. ii. 14. 4; Pār. Gṛ. i. 12. 3; ii. 9. 2; Âçv. Gṛ. i. 2. 1; Gobh. Gṛ. i. 4. 4, 9; Kāṭh. Gṛ. xLiv. 2 fg.; Viṣṇu 67. 3; Mān. Gṛ. ii. 12 (cf. Jolly, Das Dharmasūtra des Viṣṇu und das Kāṭhakagṛhya, pp. 31 and 80). — [6] Ch बलीन्ह°; E बलोनह°; Bh बलि. — [7] So, (हरे)द्विः प्रो°, E only; the rest °द्विप्रो°. — [8] Ch °धर्माभ्यांमुद°. — [9] Bi has a colon here. — [10] Ch has a colon here. — [11] Bi गूह्याभ्यो. — [12] Bi has a colon here. — [13] PBi °दृत्य. — [14] So Ch E; the rest श्लोकौ वदतः. — [15] Thus emended according to Ch, which reads °यत°; E °यतमश्नी°; the rest °यकृतमश्नो°; Ch's reading is accepted as the basis of the reading above, as it makes good metre, after अन्नकाम्या, which is apparently a later gloss, is removed. — [16] E विषवतदंनमंनकामाभ्या; the rest as above; अन्नकाम्या is a gloss, metrically superfluous. —

देवानां देवो ब्राह्मणो भावो नामैष देवतेति । १२। आग्रयणे शान्त्युदकं कृत्वा यथर्तु तण्डुलानुपसाद्य । १३। अप्सु स्थालीपाकं श्रपयित्वा पयसि वा । १४ । सजूर्ऋतुभिः सजूर्विधाभिः सजूरग्नये स्वाहा[1] । सजूरिन्द्राग्निभ्यां सजूर्द्यावापृथिवीभ्यां सजूर्विश्वेभ्यो देवेभ्यः सजूर्ऋतुभिः सजूर्विधाभिः सजूः सोमाय स्वाहेत्येकहविर्वा[2] स्यान्नानाहवींषि वा । १५ । सौम्यं तन्वच्छ्यामाकं[3] शरदि । १६। अथ यजमानः प्राशित्रं गृह्णीते[4] । १७ । प्रजापतेष्ट्वा[5] ग्रहं गृह्णामि[6] । मह्यं भूत्यै मह्यं पुष्ट्यै मह्यं श्रियै मह्यं ह्रियै मह्यं यशसे मह्यमायुषे मह्यमन्नाय मह्यमन्नाद्याय मह्यं सहस्रपोषाय मह्यमपरिमितपोषायेति[7] । १८ । अथ प्राश्नाति ।

भद्रान्नः श्रेयः समनैष्ट[8] देवास्त्वयावसेन[9] समशीमहि त्वा।
स नः पितो[10] मधुमां[11] आ विवेश शिवस्तोकाय तन्वो
न एहीति[12,13] । १९।

---

[1] The colon is exhibited in KPChE. — [2] Cf. Áçv. Gr. ii.2.4. — [3] So emended; MSS. तन्वक्ष्यामाकं. — [4] Ch गृह्णीते; E गृण्ह्णीते. — [5] Ch (prim. man.) पजापते ध. — [6] The colon appears in KP. — [7] Cf. Çāñkh. Gṛ. iii. 8. 2. — [8] So emended according to TS. etc. (see note 13): P Bi Bū समन इष्ट; K समनसा इष्ट; E सुमन इष्ट; Ch समन्न इष्ट. — [9] Ch E °वश्नेन; cf. the critical note to Çāñkh. Gṛ. iii. 8. 3. — [10] So all MSS. including Ch (prim. man.); Ch (sec. man.) स्तुतो. — [11] Ch E मधुमं. — [12] Ch E नयेहीति; cf. Ind. Stud IV. 252. — [13] Cf. TS. v. 7. 2. 4; Tāit. Br. ii. 4. 8. 7; Áçv. Çr. ii. 9. 10; Çāñkh. Gṛ. iii. 8. 8; Pār. Gṛ. iii. 1. 4; Gobh. Gṛ. iii. 8 16. —

प्राशितमनुमन्त्रयते ।

अमो ऽसि[1] प्राण तदृतं ब्रवीम्यमासि[2,3] सर्वाङ्गसि प्रविष्टः ।

स मे जरां रोगमपनुद्य शरीरादनामयैधि[4] मा रिषाम[5] इन्दो[6] इति[7] । २० ।

वत्सः प्रथमजो ग्रीष्मे वासः[8] शरदि दक्षिणा । २१ । शक्त्या वा दक्षिणां दद्यात् । २२ । नातिशक्तिर्विधीयते नातिशक्तिर्विधीयत इति[9] । २३ । ॥ ६ ॥ ॥ ७४ ॥

॥ इत्यथर्ववेदे कौशिकसूत्रे नवमो ऽध्यायः समाप्तः ॥

---

[1] So Ch (sec. man.) Āçv. Çr. and Çāṅkh. Gṛ. (see note 7); K E Bi Cb (prim. man.) आङ्गोसि; Bū आडोसि; P आङ्गो°, or आ-ञो°; Bh आजो°. — [2] E ब्रवीत्य°. — [3] So all MSS. of Kāuç. and Āçv. Çr.; Çāṅkh. Gṛ. °मोसि. — [4] So emended on the supposition that अनामयैधि is for अनामय एधि with double sandhi; cf. the introduction. The MSS. unanimously read अनामयेधि, which might be emended in accordance with Āçv. Çr. and Çāṅkh. Gṛ. to अमा मयेधि (for अमा स एधि), the latter representing the peculiar sandhi of मे, which is paralleled by the reading of Ch E in sūtra 19 (नयेहि for न एहि); cf. also Kāuc. 135. 9 (the reading °स्तायिमं for °स्ता इमं) and Ind. Stud. IV. 252. — [5] Ch माईाम (?); E मर्पोम. — [6] B Ch ईदो. — [7] Cf. Āçv. Çr. ii. 9. 10; Çāṅkh. Gṛ. iii. 8. 4. — [8] Bi ग्रीष्मो वास; both words are wanting in E. — [9] Ch विधीयते without इति. —

---

॥ ओं ॥

अथ विवाहः[1]। १। ऊर्ध्वं कार्त्तिक्या आ वैशाख्याः। २। याथाकामी वा। ३। चित्रापक्षं तु वर्जयेत्। ४। मघासु हन्यन्ते गावः फल्गुनीषु व्युह्यत इति[2] विज्ञायते[3] मङ्गलं च[4]। ५। सत्येनोत्तभिता पूर्वापरमित्युपदधीत[5]। ६। पतिवेदनं च[6]। ७। युवं भगमिति[7] संभलं सानुचरं प्रहिणोति[8.9]। ८। ब्रह्मणस्पत इति[10] ब्रह्माणम्[11]। ९। तद्विवृ-

---

[1] Daç. Kar. and Ath. Paddh.: अथ विवाह उच्यते।; the former continues: तत्र संभारान्संभृत्य। आगमकृशरं। संपटं। प्लक्षशाखा। कलश। सर्वौषधि। दधि। ज्येष्ठीमधु (! for यष्टीमधु?)। विष्टरास्त्रयः। अर्घपात्र। मधुपर्कपात्र। धुंसरं (! for धूसरं?)। जोत्र (! for योक्त्रं)। एतान्संभारान्संभृत्य। अव्यसश्चेति (! for अन्यचसश्चेति, xix. 68. 1) बर्हिर्लवनादि। अभ्यातानांतं कृत्वा ... — [2] xiv. 1. 13$^{cd}$. — [3] Ch has a colon here. — [4] Bi has a colon here. — [5] xiv. 1. 1, 23; Daç. Kar. and Ath. Paddh. सत्येनोत्तभिता इति षोडश (xiv. 1. 1–16) पूर्वापरमिति द्वाभ्यां (xiv. 1. 23, 24) एताभिरष्टादशभिराज्यं जुहुयात्। उपदधीतेति वचनात्. — [6] Daç. Kar. and Ath. Paddh. आ नो अग्न इति सूक्तेन आगमकृशरम् (Ath. Paddh. परगृहात् भक्तं तिलमिश्रितमाहृत्य) संपात्याभिमंत्र्य कुमारीभक्तं (! for °रीं भक्तं) प्राशयति; cf. Kāuç. 34. 12 fg. — [7] xiv. 1. 31$^{a}$. — [8] K प्रहिणोमि. — [9] Daç. Kar. अर्धर्चेन संपुटमभिमंत्र्य सानुचरं वरं प्रतिप्रेषयति; Ath. Paddh. अर्धर्चेन शोभनमलंकृतं पुरुषं (? Cod. पुरीषं) संचरहस्तं(?) सानुचरं प्रहिणोति. — [10] xiv. 1. 31$^{c}$. — [11] Daç. Kar. अर्धर्चेन ब्रह्माणं प्रेषयति कुमारीसमीपे वरस्य गुणान्कथयति; Ath. Paddh. अर्धर्चेन ब्रह्माणं। कुमारीपार्श्वे गत्वा वरस्य गुणान्कथयति. —

हाच्छङ्कमानो[1] निशि कुमारीकुलाद्दलीकान्यादीय[2] ।१०। देवा अग्र इति[3] पञ्चभिः सकृत्पूल्यान्यावापयति[4] ।११। उदाञ्जनृक्षरा इति[5] कुमारीपालं प्रहिणोति[6,7] ।१२। उदाहारस्य प्रतिहितेषुरग्यतो जघनतो ब्रह्मा[8] ।१३। यो अनिध्म[9] इत्यप्सु लोगं[10] प्रविध्यति[11] ।१४। इदमहमित्यपोह्य[12] ।१५। यो भद्र[13] इत्यन्वीपमुदच्य[14] ।१६। आस्यै ब्राह्मणा[15] इति प्रयच्छति[16] ।१७। आव्रजतामग्रतो ब्रह्मा जघनतो ऽधिज्यधन्वा[17] ।१८। बाह्यतः प्लक्षोदुम्बरस्योत्तरतो ऽग्नेः शाखायामासजति[18] ।१९। तेनोदकार्थान्कुर्वन्ति[19] ।२०। ततश्चान्वासेचनमन्येन[20] ।२१। अन्तरुपाती-

---

[1] P विबृहा°; Bü has a colon after the syllables विवृहा°. — [2] Ch (prim. man.) °द्यलीकान्या°. — [3] xiv. 2. 32—36. — [4] Ath. Paddh. कुमारी एकामाऊर्ति पूल्यां जुहोतीति; for Daç. Kar. see note 7. — [5] xiv. 1. 34ᵃ. — [6] K P Bh प्रहिणोमीति; Ch (prim. man.) प्रहिणोमिति; Ch (sec. man.) °णोमीति; Ch (tert. man.) as above. — [7] Daç. Kar. अर्धर्चेन कुमारीरक्षार्थं प्रेषयति। यदि वा दशवर्षाधिका कन्या तदा देवा अग्ने पञ्चभिः कुमारी एकामाऊर्तीं लाजां जुहोति (cf. sū. 11); Ath. Paddh. कुमारीरक्षार्थं धनुर्धरं पुरुषं प्रहिणोति. — [8] Daç. Kar. (अग्रे) धनुर्धरः पृष्ठे आचार्यो मध्ये उदकहारः; Ath. Paddh. उदकहरणार्थं पुरुषस्य (Cod. पुरुषो) गच्छतः अग्रे धनुर्धरो भवति। पृष्ठत आचार्यो मध्ये उदकहारः; cf. Kāuç. 26. 4; 82. 5. — [9] xiv. 1. 37. — [10] Ch E Ku लोष्टं. — [11] Ath. Paddh. and Daç. Kar. उदकसमीपे गत्वा .. एकया मृत्तिकां प्रक्षिपति. — [12] xiv. 1. 38ᵃ. — [13] xiv. 1. 38ᶜ. — [14] K P Bh °दच्य; Daç. Kar. and Ath. Paddh. अर्धर्चेन घटमुदकेन पूरयति. — [15] xiv. 1. 39ᵃ. — [16] Daç. Kar. and Ath. Paddh. उदकहाराय. — [17] Daç. Kar. and Ath. Paddh. .. मध्ये उदकहारः. — [18] Bi °संजति; Daç. Kar. and Ath. Paddh. वेदिबाह्यतः ... प्लक्षशाखोपरि कलशं स्थापयति. — [19] Bi उदकार्थान्नकु°; Daç. Kar. and Ath. Paddh. तेनोदकेन सर्वाण्युदककार्याणि करोति. — [20] Daç. Kar. and Ath. Paddh. यदि स्वल्पोदकं कलशे भवति तदान्येनोदकेनावसिञ्चति. —

त्यार्यमणमिति[1,2] जुहोति । २२ । प्र त्वा मुञ्चामीति[3] वेष्टं विचृतति[4] । २३ । उशतीरित्येतया[5] चिराधापयति[6] । २४ । सप्तभिरुष्णाः[7,8] संपातवतीः करोति । २५ । यदासन्द्यामिति[9] पूर्वयोरुत्तरस्यां स्रक्त्यां तिष्ठन्तीमाप्लावयति[10,11] । २६ । यच्च वर्चो यथा[12] सिन्धुरित्युत्क्रान्तामन्येनावसिञ्चति[13] । २७ । ॥ १ ॥ ॥ ७५ ॥

यद्दुष्कृतमिति[14] वाससाङ्गानि प्रमृज्य कुमारीपालाय प्रयच्छति[15] । १ । तुम्बरदण्डेन[16] प्रतिपाद्य[17] निर्व्रजेत् । २ । तद्वन आसजति[18] । ३ । या अकृन्तंस्त्वष्टा वास[19] इत्यहतेनाच्छादयति[20] । ४ । कृत्रिम इति[21] शतदत्तेषीकेण[22,23] कङ्क-

---

[1] Daç. Kar. and Ath. Paddh. (to अन्तरूपातीत्य), वेद्यां प्रविशति. — [2] xiv. 1. 17. — [3] xiv. 1. 19. — [4] Daç. Kar. कुमारीं केशान्वेष्टयति. — [5] xiv. 2. 52. — [6] Ath. Paddh. तिस्रः समिध आधापयति । मंत्रणं कुमारी. — [7] Daç. Kar. and Ath. Paddh. उशतोरिति सप्तभिः, xiv. 2. 52-58. — [8] Ch (sec. man.) उष्णीः; Ch (prim. man.) and the remaining MSS. as above. — [9] xiv. 2. 65. — [10] Ch °न्ते. — [11] Ath. Paddh. पूर्वोत्तरकोणे स्रक्त्यामूर्ध्वस्तिष्ठन्कुमारीं (Cod. °री) स्नापयति. — [12] xiv. 1. 35, 43. — [13] Ath. Paddh. तस्य स्थानादुत्क्रान्तामन्यस्थाने शीतोदकेनावसिञ्चति. — [14] xiv. 2. 66. — [15] Ath. Paddh. यद्दुष्कृतमिति द्वाभ्यां (!) वस्त्रेण अंगानि प्रमृज्य शिरःप्रभृति कुमारीं. — [16] So K Ch Daç. Kar. and Çāntikalpa 22. 1; Bü तुम्बुरु°; Ath. Paddh. तुंबरु°; Bi Ku तुम्बर°; P उदुम्बर°; E औदुम्बर°; cf. Ind. Stud. v. 383, note 1. — [17] Daç. Kar. and. Ath. Paddh. तद्वस्त्रं तुंबरदण्डेन कृत्वा कुमारोपालाय प्रयच्छति. — [18] Daç. Kar. कुमारो वनं गत्वा तं प्रक्षिपति. — [19] xiv. 1. 45, 53. — [20] Ath. Paddh. अन्यवस्त्रमभिमंत्र्य यज्ञोपवीतवद्वाङ्गं बध्नाति. — [21] xiv. 2. 68. — [22] So emended; K Bü Bi शतदत इषी°; P Bh शतदंत इषी°; Ch Ku शतदत्तेषी°; E शतदंतेषी°. — [23] So emended; MSS. °षीकेन. —

तेन सकृत्प्रलिख्य[1] । ५ । कृतयामभित्यवसृजति[2] । ६ । आशासाना सं त्वा[3] नह्यामीत्युभयतः पाशेन योक्त्रेन संनह्यति[4] । ७ । इयं वीरुदिति[4a] मदुघमणिं[5] लाक्षारक्तेन सूत्रेण विग्रथ्यानामिकायां[6] बध्नाति[7] । ८ । अन्ततो ह मणिर्भवति बाह्यो ग्रन्थिः[8] । ९ । भगस्त्वेत इति[9] हस्तेगृह्य[10] निर्णयति[11] । १० । शाखायां युगमाधाय दक्षिणतो ऽन्यो धारयति[12] । ११ । दक्षिणस्यां युगधुर्युत्तरस्मिन्युगतर्द्मनि दर्भेण विग्रथ्य[13] शं त इति[14] ललाटे हिरण्यं संस्तभ्य जपति । १२ । तद्भ्रे समयावसिञ्चति[15] । १३ । उपगृह्योत्तरतो[16] ऽग्नेरङ्गादङ्गादिति[17] निनयति । १४ । स्योनमिति[18] शकृत्पिण्डे ऽश्मानं निदधाति । १५ । तमा[19] तिष्ठेत्यास्था-

---

[1] Ath. Paddh. शतदंतमयं कंकतं कृत्वा सकृत्केशान्प्रलिख्य; Daç. Kar. ..इषीकमयं कंकतं कृत्वा. — [2] Daç. Kar. प्रक्षिपति. — [3] xiv. 1. 42; 2. 70. — [4] Daç. Kar. कटिप्रदेशे बध्नाति. — [4a] i. 34. 1 (vii. 56. 2). — [5] Ch मधुघ°. — [6] So emended; Daç. Kar. विगृंथ्य; MSS. विगृथ्य. — [7] Daç. Kar. पुण्याहांते बध्नाति. — [8] Daç. Kar. and Ath. Paddh. here interrupt the account of the विवाह with the अर्घ (Kāuç. 90—93); cf. Jolly, Das Dharmasūtra des Viṣṇu und das Kāṭhakagṛhyasūtra p. 76. — [9] xiv. 1. 20. So also Ath. Paddh., but Daç. Kar. भगस्ते हस्तमग्रहीत् etc. (xiv. 1. 51). — [10] So Ku Bū; the rest गृह्यं. — [11] Daç. Kar. and Ath. Paddh. आचार्यः कुमारीं दक्षिणे हस्ते गृहीत्वा कौतुकगृहाद्बहिः निःक्रामयति. — [12] Bi धारयाति. — [13] So only Bū; the remaining MSS. of the text विगृथ्य (cf. sū. 8). Daç. Kar. उत्तरस्यां युगछिद्रेण हिरण्यदर्भेण विगृह्य (!); Ath. Paddh. दरस्यागत्य वेद्यासुपरि उत्तरस्यां युगछिद्रेण हिरण्यदर्भेण विकृष्य (the second MS. विक्रष्य) । युगछिद्रेण मध्यं नीत्वा. — [14] xiv. 1. 40; Ath. Paddh. शं ते हिरण्यमिति द्वाभ्यां (xiv. 1. 40, 41). — [15] K Bū Bi Bh P शमया°. — [16] Daç. Kar. and Ath. Paddh. तमुदकं गृहीत्वा. — [17] xiv. 2. 69. — [18] xiv. 1. 47[a]. — [19] xiv. 1. 47[c]. —

प्य[1]। १६। इयं नारीति[2] ध्रुवां तिष्ठन्तीं पूल्यान्यावापयति[3]। १७। त्रिरविछिन्दतीं[4] चतुर्थीं[5] कामाय[6]। १८। येनाग्निरिति[7] पाणिं ग्राहयति[8]। १९। अर्यम्ण[9] इत्यग्निं त्रिः[10] परिणयति[11]। २०। सप्त मर्यादा[12] इत्युत्तरतो ऽग्नेः सप्त लेखा लिखति प्राच्यः[13]। २१। तासु पदान्युत्क्रामयति।२२। इषे त्वा सुमङ्गलि प्रजावति सुसीम[14] इति प्रथमम्[15]। २३। ऊर्जे त्वा रायस्पोषाय त्वा सौभाग्याय त्वा साम्राज्याय त्वा संपदे त्वा जीवातवे त्वा सुमङ्गलि प्रजावति सुसीम[16] इति सप्तमं[17] सखा सप्तपदी भवेति। २४। आ रोह तल्पं भगस्ततक्षेति[18] तल्प उपवेशयति[19]। २५।

---

[1] Daç. Kar. and Ath. Paddh. कुमारीं स्थापयति. — [2] xiv. 2. 63. — [3] Daç. Kar. ऊर्ध्वस्थितां लाजानावपयति; Ath. Paddh. ऊर्ध्वस्तिष्ठन् (!) पूल्यान्यावपयति त्रिः. — [4] So emended; E त्रिवरछिंनतीं; P चिरवछिंनतीं; Ath. Paddh. त्रिरवछिन्नतीं; the rest °विछिन्नतीं. — [5] Bi चतुर्थीं. — [6] Daç. Kar. त्रिरविछिन्नधारां त्रिर्मन्त्रावृत्तिः कामाय स्वाहा चतुर्थीं. — [7] xiv. 1. 48. — [8] Daç. Kar. सुवग्रहणं (? Cod. शुव°) करोति। अत्र स्थाने सूर्यापाठं (? Cod. सूर्य°) पठति; Ath. Paddh. येनाग्निरिति पंचभिर्ऋग्भि. (!) उपास्तिग्रहणं करोति। अत्र स्थाने चत्वारः शकधूमाः (cf. Kāuç. 8. 17; 50. 15) सूर्यापाठं (? MSS. सूर्य°) कुर्वन्ति. — [9] xiv. 1. 39[c]; Daç. Kar. adds शं ते हिरण्यं etc., xiv. 1. 40. — [10] So Ch Ku; the rest त्रिष्प°. — [11] Daç. Kar. and Ath. Paddh. वरो मन्त्रं ब्रूयात्. — [12] v. 1. 6. — [13] So all MSS. and the Paddhatis; Haas, Ind. Stud. v. 384, suggests प्राचीः or प्राच्याः; see however Lanman, Noun-inflection p. 396, top. — [14] So emended; MSS. of the text and the Paddhatis सुशोमर्मिति. Cf. the next sūtra, and Kāuç. 24. 13; 39. 9. — [15] Ath. Paddh. अनेन मंत्रेण प्रथमलेखायोपरि(!) दक्षिणं पादं ददाति. — [16] So emended; MSS. of the text and the Paddhatis सुशीममिति. Cf. the preceding sūtra. — [17] Daç. Kar. inserts the numbers २—७, beginning after ऊर्जे त्वा and ending after सप्तमं. — [18] xiv. 2. 31; 1. 60 (KChEPBh ततच इति). — [19] Ath. Paddh. and Daç. Kar. तल्पमुप°. —

उपविष्टायाः सुहृत्पादौ प्रक्षालयति । २६ । प्रक्षाल्यमानावनुमन्त्रयते ।

इमौ पादौ सुभगौ सुशेवौ सौभाग्याय कृणुतां नो[1]
अघाय ।
प्रक्षाल्यमानौ[2] सुभगौ सुपत्न्याः[3] प्रजां पशून्दीर्घ-
मायुश्च धत्तामिति ॥ २७ ।

अहं वि ष्यामि प्र त्वा मुञ्चामीति[4] योक्त्रं विचृतति[5] । २८ । अपरस्मिन्भृत्याः[6] संरभन्ते । २९ । ये जयन्ति[7] ते वलीयांस[8] एव मन्यन्ते । ३० । बृहस्पतिनेति[9] सर्वसुरभिचूर्णान्यृचर्चा[10] काम्पीलपलाशेन मूर्ध्न्यावपति[11, 12] । ३१ । उद्यछध्वं भगस्ततक्षाभ्रातृघ्नोमित्येकैकयोत्थापयति[13] । ३२ । प्रति तिष्ठेति[14] प्रतिष्ठापयति[15] । ३३ । ॥ २ ॥ ॥ ७६ ॥

सुकिंशुकं रुक्मप्रस्तरणमिति[16] यानमारोहयति । १ ।

---

[1] Bū Bi नौ; the rest and the Paddhatis, as above. — [2] Daç. Kar. °क्षाल्यमाणौ. — [3] E सुपत्नाः; ChBiKu सुपत्न्या. Haas, Ind. Stud. v. p. 384, would emend to सुपत्न्यां or संपत्न्यां. — [4] xiv. 1. 57-58. — [5] Daç. Kar. विसृजति; Ath. Paddh. विचृतत्युपाध्यायः. — [6] Bū अपरस्मिन्हि भृत्याः; Ch (sec. man.) अथरस्मिन्भृ°; Ch (prim. man.), the remaining MSS., and Daç. Kar. as above. — [7] E यजंते. — [8] Ch वलीयान्स; Ath. Paddh. यो योक्त्रं गृह्णाति ते वलीन् (!). — [9] xiv. 2. 53. — [10] Ku Ch (prim. man.) चूर्णान्यन्वर्चा; E °र्चां; Bi चूर्णान्यृवर्चा. — [11] Ch E मूर्ध्ना°. — [12] Ath. Paddh. ... काम्पीलपत्त्रेण मूर्ध्नि आवपति प्रत्यृचं वधूः. — [13] xiv. 1. 59, 60, 62. — [14] xiv. 2. 15. — [15] Ath. Paddh. (to this and the preceding sūtra) उद्यछध्वमित्येकया उत्था°। उत्थापयति । प्र तिष्ठेति प्रतिष्ठापयति । तु पुनः भगस्ततच इत्येकया उत्था° । प्र तिष्ठेति प्रतिष्ठा° । प्र तिष्ठेति प्रतिष्ठा° । अपरं चाभ्रातृघ्नीमित्येकयोत्था° । प्र तिष्ठेति प्रतिष्ठा° । इति अभ्यातानादि उत्तरतंत्रं । स्वस्तिवाचकाय आचार्याय गौर्दक्षिणा । इति विवाहः समाप्तः । अथ चतुर्थिकाकर्म उच्यते (Kāuç. 79. 1 fg.). — [16] xiv. 1. 61; 2. 30. —

एमं पन्थां ब्रह्मापरमित्यग्रतो[1] ब्रह्मा प्रपद्यते । २ । मा विदन्ननृक्षरा अध्वानमित्युक्तम्[2] । ३ । यदं पूर्वेति[3] तेनान्यस्यामूढायां[4] वाधूयस्य दशां चतुष्पथे दक्षिणैरभितिष्ठति[5] । ४ । स चेदुभयोः शुभकामो भवति सूर्यायै देवेभ्य[6] इत्येतामृचं[7] जपति[8] । ५ । समृछत[9] स्वपथो[10] ऽनवयन्तः[11] सुसीमकामावुभे[12] विराजावुभे[13] सुप्रजसावित्यतिक्रमयतो[14] ऽन्तरा[15] ब्रह्माणम् । ६ । य ऋते चिदभिश्रिष इति[16] यानं संप्रोक्ष्य विनिष्कारयति । ७ । सा मन्दसानेति[17] तीर्थे लोगं[18] प्रविध्यति । ८ । इदं सु म इति[19] महावृक्षेषु जपति । ९ । सुमङ्गलीरिति[20] वध्वीक्षीः[21] प्रति जपति । १० । या ओषधय[22] इति मन्त्रोक्तेषु । ११ । ये पितर[23] इति श्मशानेषु । १२ । प्र बुध्यस्वेति[24] सुप्तां प्रबोधयेत्[25] । १३ । सं काशयामीति[26] गृहसंकाशे जपति । १४ । उद्व ऊर्मिरिति[27] यानं संप्रोक्ष्य विमोचयति । १५ । उत्तिष्ठेत[28] इति

[1] xiv. 2. 8; 1. 64. — [2] xiv. 2. 11; 1. 34; so (without इति after the pratikas) Bü Ku; the rest °नृचराध्वानमित्युक्तं. It seems that इति is omitted because the second इति follows immediately upon it (a sort of haplographia). The phrase अध्वानमित्युक्तं seems to refer to Kāuç. 50. 1 fg. — [3] xiv. 2. 74. — [4] P °मूढाया; Bü °मूढाभ्यां. — [5] Bü दच्चिणैरभितिष्ठंति. — [6] xiv. 2. 46. — [7] K °तानृचं. — [8] K जपे(छमृछत); Ku जपेत्समृ°. — [9] See the preceding note. — [10] Ch (sec. man.) श्वपथो; E श्वेपथो. — [11] So (but without avagraha) all MSS.; Haas, Ind. Stud. v. 391, reads the passage: समृछत(:) स्वपथो नावयातः; the last by conjecture. — [12] So emended; MSS. सुशीम°. Cf. Kāuç. 76. 23. — [13] Ch E Ku भिराजा°. — [14] P Bh सुप्रजावि°. — [15] K P Bh °क्रमयतोत्तरा; Bi °क्रमयतांतरा. — [16] xiv. 2. 47. — [17] xiv. 2. 6. — [18] Ku Ch E लोष्टं; P Bh लोकं. — [19] xiv. 2. 9. — [20] xiv. 2. 28. — [21] Ch (sec. man.) वर्ध्वंची; Ch (prim. man.) वध्वीची. — [22] xiv. 2. 7. — [23] xiv. 2. 73. — [24] xiv. 2. 75. — [25] E प्रति°. — [26] xiv. 2. 12. — [27] xiv. 2. 16. — [28] xiv. 2. 19. —

पत्नी शालां[1] संप्रोक्षति । १६ । स्योनमिति[2] दक्षिणतो वलीकानां शकृत्पिण्डे ऽश्मानं निदधाति । १७ । तस्योपरि मध्यमपलाशे[3] सर्पिषि चत्वारि दूर्वाग्राणि । १८ । तमा[4] तिष्ठेत्यास्थाप्य । १९ । सुमङ्गली प्रतरणीह[5] प्रियं मा हिंसिष्टं ब्रह्मापरमिति[6] प्रत्यृचं[7] प्रपादयति । २० । सुहृत्पूर्णकंसेन[8] प्रतिपादयति । २१ । अघोरचक्षुरित्यग्निं[9] त्रिः[10] परिणयति ।२२। यदा गार्हपत्यं सूर्यायै देवेभ्य[11] इति मन्त्रोक्तेभ्यो नमस्कुर्वतीमनुमन्त्रयते ।२३। ॥ ३॥ ॥ ७७ ॥

शर्म वर्मेति[12] रोहितचर्माहरन्तम् । १ । चर्म[13] चोपस्तृणीयनेत्युपस्तृणन्तम् । २ । यं बल्वजमिति[14] बल्वजं न्यस्यन्तम् । ३ । उप[15] स्तृणीहीत्युपस्तृणन्तम् । ४ । तदा[16] रोहत्वित्यारोहयति । ५ । तत्रोपविश्येत्युपवेशयति[17] । ६ । दक्षिणोत्तरमुपस्थं कुरुते । ७ । सुज्यैष्ठ्य[18] इति कल्याणनामानं ब्राह्मणायनमुपस्थ उपवेशयति । ८ । वि तिष्ठन्तामिति[19] प्रमदनं प्रमायोत्थापयति । ९ । तेन भूतेन तुभ्यमग्रे शुम्भनी[20] अग्निर्जनविन्मह्यं जायामिमामदात्सोमो वसुविन्मह्यं जायामिमामदात्पूषा जातिविन्मह्यं जाया-

---

[1] So E Bi; the rest ग्नालं. — [2] xiv. 1. 47. — [3] K P Bh °पलाशेन. — [4] xiv. 1. 47[c]. — [5] Ch प्रतरणीरिह. — [6] xiv. 2. 26; 1. 21, 63, 64. — [7] So emended; all MSS. except Bū read ब्रह्मापरमित्यृचं; Bū °मित्यृजुं. — [8] Bi Bh °कांसेन. — [9] xiv. 2. 17. — [10] MSS. त्रिष्प°. — [11] xiv. 2. 20, 46. — [12] xiv. 2. 21. — [13] xiv. 2. 22[b]. — [14] xiv. 2. 22. — [15] xiv. 2. 23. — [16] xiv. 2. 22[c]. — [17] xiv. 2. 28[c]. — [18] xiv. 2. 24[d]. — [19] xiv. 2. 25. — [20] vi. 78. 1; xiv. 2. 1, 45; K Bū have a colon here. —

मिमामदादिन्द्रः सहीयान्मह्यं जायामिमामदादग्नये जनविदे स्वाहा सोमाय वसुविदे स्वाहा पूष्णे ज्ञातिविदे स्वाहेन्द्राय सहीयसे स्वाहेत्यागछतः । १० । सविता प्रसवानामिति[1] मूर्ध्नोः[2] संपातानानयति । ११ । उदपात्र[3] उत्तरान्[4] । १२ । शुम्भन्याञ्जल्योर्निनयति[5] । १३ । तेन भूतेनेति[6] समशनम् । १४ । रसानाशयति[7] स्थालीपाकं च । १५ । यवानामाज्यमिश्राणां पूर्णाञ्जलिं जुहोति । १६ । ॥ ४ ॥

॥ ७९ ॥

सप्त मर्यादा[8] इति तिसृणां प्रातरावपते[9] । १ । अक्ष्यौ[10] नाविति[11] समाञ्जाते[12] । २ । महीमू ष्विति[13] तल्पमालम्भयति । ३ । आ रोह[14] तल्पमित्यारोहयति । ४ । तत्रोपविश्येत्युपवेशयति[15, 16] । ५ । देवा अग्र इति[17] संवेशयति । ६ ।

---

[1] v. 24. 1. — [2] So emended; MSS. मूर्ध्न्योः. — [3] Haas, Ind. Stud. v. p. 397, reads उदपात्रत; MSS. उदपात्र. — [4] Ch (sec. man.) : उत्तरा(कु°); the rest उत्तरां(कु°). — [5] Ch Bü (उत्तरां) कुम्भ्यां°; the rest °कुम्भन्या°; Haas and Weber, Ind. Stud. v. 397, note 2, unnecessarily emend to शुम्भनीत्यञ्जल्यो°; शुम्भन्या means with the çumbhanī-verse (xiv. 2. 45); cf. Kāuç. 79. 25, as also शं-नो-देव्याः, Kāuç. 140. 5, and जीवाभिर्, Kāuç. 3. 4. — [6] vi. 78. 1. — [7] So P Bh; Ch Ku E Bi Bü °शायतः; K °शायत; cf. Ind. Stud. v. 397, note 3. — [8] v. 1. 6. — [9] Daç. Kar. and Ath. Paddh. अथ चतुर्थीकर्म (Ath. Paddh. चतुर्थिकाकर्म) उच्यते (cf. Kāuç. 76. 33, note) । तिसृणां रात्रीणां व्यतीतायां (!) अभ्यातानांतं कृत्वा . . . वर एकामाहुतिं जुहोति. — [10] Ch (°वपते) अचौ; the rest (°वपते) च्यौ. — [11] vii. 36. 1. — [12] So all MSS.; Haas, Ind. Stud. v. p. 399, note 3, emends to समञ्जाते. Daç. Kar. वरवधू परस्परं कज्जलमभिमंत्र्य अक्षिणी अंक्ते (!). — [13] vii. 6. 2. — [14] xiv. 2. 31. — [15] xiv. 2. 23c. — [16] Ath. Paddh. उपवेशयतीती. — [17] xiv. 2. 32. —

अभि त्वेत्यभिछादयति[1] । ७ । सं पितराविति[2] समावेशयति[3] । ८ । इहेमाविति[4] चिः संनुदति[5] । ९ । मदुघमणिमौक्षे ऽपनीयेयं[6] वीरुदमो ऽहमिति[7] संस्पृशतः[8] । १० । ब्रह्म[9] जज्ञानमित्यङ्गुष्ठेन व्यचस्करोति[10] । ११ । स्योनाद्योनेरित्युत्थापयति[11, 12] । १२ । परिधापनीयाभ्यामहतेनाछादयति[13] । १३ । बृहस्पतिरिति[14] शष्पेणाभिघार्य[15] व्रीहियवाभ्यामभिनिधाय दर्भपिञ्जूल्या सीमन्तं विचृतति[16] । १४ । शणशकलेन परिवेष्ट्य तिस्रो रात्रीः प्रति सुप्रास्ते[17] । १५ । अनुवाकाभ्यामन्वारब्धाभ्यामुपदधीत[18] । १६ ।

---

[1] vii. 37. 1; Daç. Kar. and Ath. Paddh. अभि त्वा मनुजातेन etc. वस्त्रेणाछादयति तौ. — [2] xiv. 2. 37; Daç. Kar. cites here the three verses 37, 38, and 39; Ath. Paddh. सं पितराविति चतसृभिः (!). — [3] Daç. Kar. and Ath. Paddh. संमुखं करोति. — [4] xiv. 2. 64. — [5] Ath. Paddh. एकया परस्परं कंठग्रहणं करोति । त्रीन्वेलायां तत्राह पैठीनसिः । त्रीन्वेलायां । आवपेत्सुरभिगन्धान् चीरसर्पिष्यधोदकं (!) । एतदेवमित्याङ्गरचं (! for °रोचं?) तु मधुना सह; Daç. Kar. has a metrical passage too corrupt to report, corresponding to the last part of this extract; this also seems to be ascribed to Pāiṭhīnasi. — [6] Bü Bi पिनीये°; E °मौचेपनीये°. — [7] i. 34. 1; xiv. 2. 71. — [8] Daç. Kar. and Ath. Paddh. तं मदुघमणिं पिष्ट्वा सुगन्धमध्ये (Ath. Paddh. घृयुतमध्ये) प्रक्षिप्य उद्वर्तयेत् इयं वीरुदिति सूक्तेन । अमो ऽहमिति द्वाभ्यां अचतमभिमंत्र्य परस्परं कंठग्रहणं करोति. — [9] iv. 1. 1 (v. 6. 1). — [10] Daç. Kar. and Ath. Paddh. अङ्गुष्ठेन नाभिदेशे (MSS. अङ्गुष्ठेनाभिदेशे) व्यचस्करोति वरः. — [11] xiv. 2. 43. — [12] E °त्युपस्थापयति; Daç. Kar. उत्थापयति वरवधू (!). — [13] Daç. Kar. and Ath. Paddh. या अकृंतन्वष्टा वासो (xiv. 1. 45, 53) द्वाभ्यां. — [14] xiv. 1. 55; Ath. Paddh. बृहस्पतिरिति द्वाभ्यां (xiv. 1. 55, 56). — [15] Ch (prim. man.) शिष्पेणा°; Bh शः:ष्पेणा°. — [16] Daç. Kar. कंचूकं (! for कंचु°?) मूर्ध्नि दधाति । व्रीहियवौ शिरः (!) दर्भपिञ्जूलीसहितं; Ath. Paddh. कंदकं (!) मूर्ध्नि दधाति. — [17] E सुप्रोस्ते; P Bh सुप्रस्ते. — [18] Ath. Paddh. to this and the preceding sūtra, शणेन परिवेष्य । सत्येनोत्त-

इहेदसाथेत्येतया[1] शुल्कमपाकृत्य[2, 3] । १७ । द्वाभ्यां निवर्तयतीह मम राध्यतामत्र तवेति[4] । १८ । यथा वा मन्यन्ते । १९ । परा देहीति[5] वाधूयं ददतमनुमन्त्रयते[6] । २० । देवैर्दत्तमिति[7] प्रतिगृह्णाति । २१ । अपास्मत्तम इति[8] स्थाणावासजति[9] । २२ । यावतीः कृत्या इति[10] व्रजेत्[11] । २३ । या मे प्रियतमेति[12] वृक्षं प्रतिछादयति[13] । २४ । शुम्भन्याप्लुत्य[14] । २५ । ये अन्ता[15] इत्याछादयति[16] । २६ । नवं वसान[17] इत्याव्रजति[18] । २७ । पूर्वापरं[19] यत्र नाधिगछेद्ब्रह्मापरमिति[20, 21] कुर्यात्[22] । २८ । गौर्दक्षिणा

---

भितेति (xiv. 1. 1) सर्वेषु काण्डेषु आज्यं जुहोति तंत्रे आज्यं वा समिधो वा पुरोडाशं वा व्रीहियवतिलादि वा जुहोति विकल्पः । सत्येनोत्तभितेति द्वा० अनुवा० (xiv. 1. 1–2. 75) आज्यादयस्त्रयोदश हवींषि मध्ये एकमावपंति । तिस्रो रात्रीर्मध्ये यदाप्रसक्ता भवन्ति तदा इदं प्रायश्चित्तं करोति. —

[1] xiv. 1. 32; Daç. Kar. and Ath. Paddh. द्वाभ्यामृग्भ्यां (xiv. 1. 32–33). — [2] E Bü Ku शुक्क°. — [3] Bü Bi °मुपकृत्य; Daç. Kar. and Ath. Paddh. शुल्कं द्विधा करोति. — [4] Ath. Paddh. वरवध्वौ ददाति (!). — [5] xiv. 1. 25; Ath. Paddh. द्वाभ्यां. — [6] Ath. Paddh. and Daç. Kar. . . . तृतीयं वस्त्रमभिमंत्र्य (cf. Kāuç. 76. 1, 4) वरो ददाति. — [7] xiv. 2. 41; Daç. Kar. and Ath. Paddh. add verse 42 also. — [8] xiv. 2. 48. — [9] Ath. Paddh. स्थाणौ (both MSS. छाणा!) परि वस्त्रं प्रक्षिपति. — [10] xiv. 2. 49. — [11] E Bi व्रजेत; Daç. Kar. and Ath. Paddh. वस्त्रं गृहीत्वा आव्रजति. — [12] xiv. 2. 50. — [13] Bü °छादयते. — [14] xiv. 2. 45; Bü Ch (prim. man.) शुंभन्या°; Ch (sec. man.) शुंभनी इत्या°; Ath. Paddh. शुंभनीत्येकया तं वस्त्रमुदकेन संप्रोक्षति: cf. Kāuç. 78. 13. — [15] xiv. 2. 51. — [16] Ath. Paddh. and Daç. Kar. आत्मानं आचार्यः. — [17] xiv. 2. 44. — [18] Daç. Kar. आचार्यः. — [19] xiv. 1. 23; cf. Kāuç. 75. 6. — [20] E P Bi Ch (sec. man.) नाभि°. — [21] xiv. 1. 64. — [22] Ath. Paddh. पूर्वापरं आचार्यो न जानाति । तदा ब्रह्मापरमित्यनया ऋचा करोति । अभ्यातानाद्युत्तरतंत्रं । सर्वत्र हस्तहोमान् । गंत्रविकल्पः । यदि

प्रतीवाहः । २९ । जीवं रुदन्ति यदीमे केशन[1] इति जुहोति । ३० । एष सौर्यो[2] विवाहः । ३१ । ब्रह्मापरमिति[3] ब्राह्मयः[4] । ३२ । आवृतः प्राजापत्याः प्राजापत्याः[5] । ३३ ।

॥ ५ ॥ ॥ ७९ ॥

॥ इत्यथर्ववेदे कौशिकसूत्रे दशमो ऽध्यायः समाप्तः ॥

---

पर्वस्थंडिले ऽग्निं करोति तदा उत्तरतंत्रं करोति। कामस्तदग्र इति कामसूक्तं (xix. 52) जपेत् । इति चतुर्थिकाकर्म समाप्तः(!). Here follows in the Ath. Paddh. the ceremony called मदुघमणिप्रायश्चित्तं; see Ath. Pariç. 39. 9 (समुच्चयप्रायश्चित्तानि); cf. Ind. Stud. v. 404.

[1] xiv. 1. 46; 2. 59. — [2] Ch E सूर्यो. — [3] xiv. 1. 64. — [4] Bū Ku ब्राह्म. — [5] So emended with Haas-Weber, Ind. Stud. v. 400 (cf. also 402 and 410); MSS. आवृताः प्रजापत्यः प्रजापत्यः; E P Bi fail to repeat the word प्रजापत्यः. —

॥ ओं ॥

अथ पितृमेधं व्याख्यास्यामः । १ । दहननिधानदेशे[1, 2] परिवृक्षाणि निधानकाल इति ब्राह्मणोक्तम्[3] । २ । दुर्बलीभवन्तं[4] शालातृणेषु दर्भानास्तीर्य स्योनास्मै[5] भवेत्यवरोहयति । ३ । मन्त्रोक्तावनुमन्त्रयते । ४ । यत्ते कृष्ण[6] इत्यवदीपयति । ५ । आहिताग्नौ[7] प्रेते संभारान्संभरति[8] । ६ । आज्यं च पृषदाज्यं चाजं[9] च गां च । ७ । वसनं पञ्चमम् । ८ । हिरण्यं षष्ठम्[10] । ९ । शरीरं नान्वालभते[11] । १० । अन्यं चेष्टन्तमनुमन्त्रयते । ११ । शान्त्युदकं करोत्यसकलं[12] चातनानां चान्वावपते[13, 14] । १२ । शान्त्युदकोदकेन[15] के-

---

[1] E °निधानो°. — [2] Bü Ch (prim. man.) °देश. — [3] Ath. Paddh. दहननिधानदेशे परिवृक्षाणि इति कौशिकसूत्रमाह। दहनस्थाने वृक्षवर्जिते देशे निधानकाल इति ब्राह्मणोक्तं. — [4] Ath. Paddh. दुर्बलीशब्देन मृत्युः. — [5] xviii. 2. 19. — [6] xviii. 3. 55. — [7] Bi °ग्ना; Bh °ग्नि. — [8] Antyeṣṭi. तत्र उपहारः। शुद्धो ऽग्निः। दर्भाः। तिलाः। घृतं। हिरण्यशकलाः ७। चंदनकाष्ठं। गोपीचंदनं। तुलसी। पिष्टं। ताम्रपात्र २। गोमयं। खनित्रं। अहतवस्त्रं। सूत्रं। इत्यादिदुग्धं। पलाशशाखा. — [9] K Bi वा°. — [10] K P Ch (prim. man.) पृष्ठं; Bh पृष्टं. — [11] So Bü only; K P Bh शरीरन्नोन्वा°; Ch Ku शरीरं नोन्वा°; E शरीरमन्वालंते. — [12] So Ch (sec. man.); Ch (prim. man.) °सकलो; E Ku °सकल; P Bh °सकले; Bü Bi °शकलं; K °शकले. — [13] K Ku वा°. — [14] K Bh °न्वापयते. — [15] Bü शान्त्युदकेन. —

श्मश्रुरोमनखानि संहारयन्ति। १३। आप्लावयन्ति। १४। अनुलिम्पन्ति। १५। स्रजो ऽभिहरन्ति[1]। १६। एवंस्नातमलंकृतमहतेनावाग्दशेन[2] वसनेन प्रच्छादयत्येतत्ते देव एतत्त्वा वासः प्रथमं न्वागन्निति[3]। १७। अपेममित्यग्निषु[4] जुहोति। १८। उखाः[5] कुर्वन्ति। १९। ताः शकृदाभ्यन्तरं[6] लिम्पन्ति[7] शुष्केण वा पूरयन्ति[8]। २०। ताः पृथगग्निभिः संतापयन्त्या शकृदादीपनात्[9]। २१। तेषां हरणानुपूर्वमाहवनीयं प्रथमं ततो दक्षिणाग्निं ततो गार्हपत्यम्। २२। अथ विदेशे[10] प्रेतस्या रोहत जनित्रीं जातवेदस[11] इति पृथगरणीष्वग्नीन्समारोपयन्ति। २३। तेषु यथोक्तं करोति। २४। अपि वान्यवत्साया[12] वा संधिनीक्षीरेणैकशलाकेन[13, 14] वा मन्थेनाग्निहोत्रं जुहोत्या[15] दहनात्। २५। दर्शपूर्णमासयोः कृष्णाकृततण्डुलानां[16] तस्या आज्येन नान्तं न बर्हिः[17]। २६। पलालानि बर्हिः। २७। तिल्पिञ्ज्या[18] इध्माः। २८। गृहानाज्यभागौ पुरस्ताद्धो-

---

[1] E स्रजोभिर्हरन्ति; K Bü स्रजोभिर्हरन्ति; P Bi Bh स्रजोभिर्हरति; Ch (prim. man.) स्रजोभिरहरति; Ch (sec. man.) as above. — [2] K Bh Ch (prim. man.) °ग्दशेन. — [3] xviii. 4. 31; 2. 57[a]. — [4] xviii. 2. 27. — [5] K Bü E Bi Bh Ch (prim. man.) उपाः. — [6] Ch Bh सकृदा°; P ताः त्सकृदा°. — [7] K P B Bh Ch (prim. man.) लिखति. — [8] K पूरयति. — [9] Ku Bü Ch P Bi Bh सकृदा°. — [10] Ch (गार्हपत्य)मंथवदेशे; Bh (गार्हपत्यं)मंथ विदेशे; Bü वैदेशे. — [11] xviii. 4. 1. — [12] Cf. Kāuç. 82. 22. — [13] Ch (prim. man.) सन्निधीनि°; Ch (sec. man.) शरीनि°. — [14] Bü °चीरेण वैक°. — [15] Bü जुहूत्या. — [16] K P E कृष्णतण्डु°; Bh कृष्टतण्डु°. — [17] K बर्हिष्प°. — [18] K P Bi Bh तिल्प्यांज्या; Ch (prim. man.) तिल्पांज्या; E तिल्पंज्या; Bü Ch (sec. man.) as above; cf. xii. 2. 54. —

मसंस्थितहोमानुद्धृत्य । २९ । प्राणापानावरुद्ध्यै[1] निधनाभिर्जुहुयात् । ३० । अथोभयोरुत्तिष्ठेत्युत्थापयति[2] । ३१ । प्र च्यवस्वेति[3] त्रिः संहापयति[4] यावत्कृत्वश्चोत्थापयति[5] । ३२ । एवमेव कूदीं जघने[6] निबध्य । ३३ । इमौ युनज्मीति[7] गावौ युनक्ति पुरुषौ वा । ३४ । उत्तिष्ठ प्रेहि प्र च्यवस्वोदन्वतीत एते ऽग्नीषोमेदं पूर्वमिति[8] हरिणीभिर्हैरेयुरति[9, 10] द्रुवेत्यष्टभिः[11] । ३५ । इदं त[12] इत्यभिमन्त्रयतः । ३६ । प्रजानत्यघ्न्ये[13] इति जघन्यं गामेधमग्निं[14] परिणीय ।३७। स्योनास्मै[15] भवेत्युत्तरतो ऽग्नेः शरीरं निदधाति।३८। अध्वर्यव इष्टिं निर्वपन्ति । ३९ । तस्यां यथादेवतं[16] पुरस्ताद्धोमसंस्थितहोमानुद्धृत्य । ४० । प्राणापानावरुद्ध्यै[17] निधनाभिर्जुहुयात्।४१। अथोभयोरपेत ददामीति[18]

---

[1] Thus with doubtful emendation; E °वरुध्या°; the remaining MSS. प्राणापानावबध्योर्नि°. Cf. sū. 41. — [2] xviii. 3. 8. — [3] xviii. 3. 9. — [4] Bū inserts here the word यापयति. — [5] K Bū Bi Bh यावत्कृत्वश्चो°. — [6] K घने. — [7] xviii. 2. 56; the Antyeṣṭi. employs this verse differently: इमौ युनज्मि etc. वस्त्रं कटे बध्नाति । शवं ततः । प्रक्षालनं । अहतवस्त्रपरिधापनं; cf. sū. 83. Similarly Ath. Paddh.: इमौ युनज्मीत्येकया कटे बध्वा शवं। ततो दहनस्थाने गत्वा भूमौ संस्कार उच्यते. — [8] xviii. 3. 8, 9; 2. 48; 1. 61; 2. 53; 4. 44; K here inserts the syllables: नान्यस्यामूढायां वाधूयस्य (contamination from Kāuç. 77. 4). — [9] Ch °र्हैरेयुरित्य(तिद्रुवे°). — [10] xviii. 2. 11–18. — [11] In the Antyeṣṭi. the verses of this sūtra are employed as follows: उत्तिष्ठ ... इदं पूर्वं etc. । अनेन मंत्रेण कलशमुत्थाप्य । अति द्रवेत्यष्टर्चेन अस्थीन्यभिमंत्र्य (here follow the eight verses in full) । एताभिर्ऋग्भिः । हरणोभी (!). Cf. Kāuç. 82. 31; 83. 20; 84. 13. — [12] xviii. 3. 7. — [13] xviii. 3. 4; Ch Kn E °घ्न. — [14] Ch गोमेधम°; P गमिनम°; cf. Kāuç. 81. 20. — [15] xviii. 2. 19. — [16] K Bi Bh °दैवतं. — [17] Thus emended; MSS. प्राणापानावबध्योर्नि°. Cf sū. 30. — [18] xviii. 1. 55; 2. 37. —

शान्त्युदकं कृत्वा संप्रोक्षणीभ्यां काम्पीलशाखया[1] दहनं संप्रोक्ष्य[2] । ४२ । उदीरतामित्युद्धृत्याभ्युक्ष्य[3] लक्षणं कृत्वा पुनरभ्युक्ष्य प्राग्दक्षिणमेधश्चिन्वन्ति[4,5] । ४३ । इयं नारीति[6] पत्नीमुपसंवेशयति[7] । ४४ । उदीर्ष्वेत्युत्थापयति[8] । ४५ । यद्धिरण्यं बिभर्ति तद्दक्षिणे पाणावादायाज्येनाभिघार्य ज्येष्ठेन[9] पुत्रेणादापयतीदं हिरण्यमिति[10] । ४६ । स्वर्गे यत इति[11] दक्षिणं हस्तं निर्मार्जयति । ४७ । दण्डं हस्तादिति[12] मन्त्रोक्तं ब्राह्मणस्यादापयति । ४८ । धनुर्हस्तादिति[13] क्षत्रियस्य । ४९ । अष्ट्रामिति[14] वैश्यस्य । ५० । इदं पितृभ्य इति[15] दर्भानिधान्स्तृणाति । ५१ । तत्रैनमुत्तानमादधीतेजानश्चित्तमारुक्षदग्निमिति[16,17] । ५२ । प्राच्यां त्वा दिशीति[18] प्रतिदिशम् । ५३ । नेत्युपरिबभ्रवः । ५४ ।

---

1 Ch and Ath. Paddh. °शाखाया. — 2 K Ch E °प्रोच; Antyeṣṭi. and Ath. Paddh. दहनस्थानं मार्जयति. — 3 xviii. 1. 44. — 4 E P Bh °दचिणमधखि°. — 5 E Ch (sec. man.) चिन्वती(यं); Ath. Paddh. and Antyeṣṭi. पूर्वदचिणाभिमुखकाष्ठानि विचिन्वन्ति. — 6 xviii. 3. 1. — 7 Antyeṣṭi. and Ath. Paddh. पत्नीं प्रेतेन सह संवेशयति । मरणार्थं (!) । ततः पुराणोक्तेन विधिना करोति. — 8 xviii. 3. 2; Antyeṣṭi. and Ath. Paddh. अथ यद्युत्तिष्ठति तदा उदीर्ष्वेति, etc. — 9 Ch ज्येष्ठेण. — 10 xviii. 4. 56; Antyeṣṭi. and Ath. Paddh. add ये च जीवा इति (xviii. 4. 57) सर्पिषा संस्पृशति. — 11 xviii. 4. 56°. — 12 xviii. 2. 59. — 13 xviii. 2. 60. — 14 This pratika seems to be a modification of one of the two verses immediately preceding. — 15 xviii. 1. 46 (4. 51). — 16 xviii. 4. 14ᵃ. — 17 Antyeṣṭi. and Ath. Paddh. चित्तोपरि उत्तानं शवमादधाति । अहतवस्त्रपरिधापनं प्रेतं । एतत्ते देवः सविता etc. । एतत्त्वा वासः etc. । द्वाभ्यां (xviii. 4. 31; 2. 57; cf. sū. 17) प्रेतस्याहतवस्त्रं परिधापयति. — 18 xviii. 3. 30. —

अनुमन्त्रयते। ५५। अथास्य सप्तसु प्राणेषु सप्त हिरण्यशकलान्यवास्यत्यमृतमस्यमृतत्वायामृतमस्मिन्धेहीति[1]।५६।

॥ १ ॥ ॥ ८० ॥

अथाहिताग्नेर्दर्भेषु कृष्णाजिनमन्तर्लोमास्तीर्य[2] । १ । तत्रैनमुत्तानमाधाय[3] । २ । अथास्य यज्ञपात्राणि पृषदाज्येन पूरयित्वानुरूपं[4] निदधति[5] । ३ । दक्षिणे[6] हस्ते जुहूम् । ४ । सव्य उपभृतम्[7] । ५ । कण्ठे ध्रुवां मुखे ऽग्निहोत्रहवणीं नासिकयोः[8] स्रुवम् । ६ । तान्यनुमन्त्रयते जुहूर्दाधार द्यां ध्रुव आ रोहेति[9]।७। ललाटे प्राशित्रहरणम्।८। इममग्ने चमसमिति[10] शिरसीडाचमसम् । ९ । देवा यज्ञमित्युरसि[11] पुरोडाशम् । १० । दक्षिणे[12] पार्श्वे स्फ्यं सव्य उपवेषम् । ११ । उदरे पात्रीम् । १२ । अष्ठीवतोरुलूखलमुसलम् । १३ । श्रोण्योः[13] शकटम् । १४ । अन्तरेणोरू अन्यानि यज्ञपात्राणि । १५ । पादयोः शूर्पम् । १६ । अपो[14] मृन्मयान्युपहरन्ति[15] । १७ । अयस्मयानि निदध-

---

[1] K omits the syllables ॰मृतत्वाया॰; Antyeṣṭi. and Ath. Paddh. … आदधाति मुखादिसप्तश्रोत्रान्. — [2] K P Bh ॰न्तर्धानमास्तीर्य; Ch (prim. man.) ॰न्तर्लोमानास्तोर्य; Ku E P Bü Ch (sec. man.) as above. — [3] Bü ॰धाप्य. — [4] So emended; K P Bh पूरयित्वा धूपं; Bü रूपं; Bi रूप; E तूप; Ku Ch (sec. man.) ॰नपं; Ch (prim. man.) रूपं. — [5] Ch E Bi ॰दधाति. — [6] K P Bh दचिण॰. — [7] So E and Ch (prim. man.), cf. Āçv. Gṛ. iv. 3. 3; the rest, including Ch (sec. man.), उपभृत्. — [8] Ch Ku E नासिकयो. — [9] xviii. 4. 5, 6. — [10] xviii. 3. 53. — [11] xviii. 4. 2. — [12] Bü दधिण॰. — [13] Ch Ku E श्रोण्यां. — [14] Ch (sec. man.) आपो; Ch (prim. et tert. man.) as above. — [15] Ch E मृधमया॰. —

ति[1] । १८ । अमा पुत्रा च हषत्[2] । १९ । अथोभयोरपश्यं युवतिं प्रजानत्यघ्न्य[3] इति[4] जघन्यां[5] गां प्रसव्यं परिणीयमानामनुमन्त्रयते[6] । २० । तां नैर्ऋतेन जघनताघ्नन्त्[7] उपवेशयन्ति[8] । २१ । तस्याः पृष्ठतो वृक्कावुद्धार्य[9] पाण्योरादधत्यति[10] द्रव श्वानाविति[11] । २२ । दक्षिणे दक्षिणं सव्ये सव्यम् । २३ । हृदये हृदयम् । २४ । अग्नेर्वर्मेति[12] वपया सम्नछिद्रया मुखं प्रच्छादयन्ति[13] । २५ । यथागात्रं गात्राणि । २६ । दक्षिणैर्दक्षिणानि सव्यैः सव्यानि । २७ । अनुबद्धशिरःपादेन[14] गोशालां चर्मणावछाद्य[15] । २८ । अजो भाग उस्त्वा वहन्त्विति[16] दक्षिणतो ऽजं बध्नाति । २९ । अस्माद्वै[17] त्वमजायथा अयं त्वदधि[18] जायतामसौ[19] स्वाहेत्युरसि[20, 21] गृह्ये[22] जुहोति । ३० । तयामिषु[23] जुहोत्यग्नये स्वाहा कामाय स्वाहा लोकाय स्वाहेति[24] । ३१ ।

---

[1] Ch निदधाति; Bi °दध्वति. — [2] So Bū only; the rest धृषत्. The text of this sūtra is doubtful; cf. दृषत्पुत्र, and Āçv. Gr. iv. 3. 18. — [3] Ch Ku E °घ्न. — [4] xviii. 3. 3, 4. — [5] K Bū जघन्यं; cf. Kāuç. 80. 37. — [6] K P °णीयमानम°; cf. Kāuç. 80. 37. — [7] So (with double sandhi) all MSS., except Bū which resolves to जघनत आघ्नंत; see the introduction. — [8] So Bū; the rest °यति. — [9] P Bi वृत्त्वावु°. — [10] So Bū; the rest °दधात्वति. — [11] xviii. 2. 11. — [12] xviii. 2. 58. — [13] E Ch (prim. man.) °यति. — [14] K Bū E P Bi °शिरस्पादेन; cf. Kāuç. 24. 10; 64. 22. — [15] K E P Bi Bh Ch (prim. man.) °वत्साद्य. — [16] xviii. 2. 8, 22; the second pratīka is wanting in K, and P Bi Bh have instead of it: एतत्त्वा वास (xviii. 2. 57). — [17] K (बध्नाति)यस्माद्वै; Bū (बध्नाति)स्माद्वै; P (बध्नात्य)स्माद्वै. — [18] So Ku and Āçv. Gr. iv. 3. 27; K अयन्नदधि; Bū अयत्तदधि; the rest अयं तदधि. — [19] K P Bh जायथा इत्यसौ. — [20] Cf. Tāit. Ār. vi. 2. 1; 4. 2; Āçv. Gr. iv. 3. 27. — [21] P Bh °त्युत्तरसि. — [22] So Bū Ku Ch E; K P Bi Bh गृहे; is the passage to be emended to उरसिगृह्य (gerund)? Cf. Kāuç. 76. 10. — [23] K Bh Bi यथा°. — [24] Cf. Āçv. Gr. iv. 3. 26. —

दक्षिणाग्नावित्येके ।३२। मैनमग्ने वि दहः[1] शं तप आ रभस्व प्रजानन्त इति[2] कनिष्ठ आदीपयति[3] । ३३ । आदीप्ते सुवेण यामान्होमाञ्जुहोति[4,5] परेयिवांसं प्रवतो महीरिति[6] । ३४ । यमो नो गातुं प्रथमो विवेदेति[7] द्वे प्रथमे[8] । ३५ । अङ्गिरसो नः पितरो नवग्वा इति[9] संहिताः सप्त । ३६ । यो ममार प्रथमो मर्त्यानां ये नः पितुः पितरो ये पितामहा इत्येकादश[10] । ३७ । अथ सारस्वताः ।३८। सरस्वतीं देवयन्तो हवन्ते सरस्वतीं पितरो हवन्ते सरस्वति या सरथं ययाथ सरस्वति व्रतेषु त इदं ते हव्यं घृतवत्सरस्वतीन्द्रो[11] मा मरुत्वानिति[12] । ३९ । दक्षिणतो ऽन्यस्मिन्ननुष्ठाता जुहोति । ४० । सर्वैरुपतिष्ठन्ति त्रीणि प्रभृतिभिर्वा[13] । ४१ । अपि वानुष्ठानीभिः । ४२ । एता अनु-

---

[1] The words वि दहः are wanting in K; Ch Ku E P Bi Bh दह· — [2] xviii. 2. 4, 36; 3. 71 (et al.); ii. 34. 5. — [3] Antyeṣṭi. ततः अग्निस्थापनं। क्रव्यादमग्निं etc. (xii. 2. 8-10; cf. Kāuç. 71. 12) । मैनमग्ने etc. (xviii. 2. 4-7) । शं तप etc. । आ रभस्व जातवेदः etc. । प्रजानन्त्यघ्न्ये etc. (xviii. 3. 4); एतैर्मंत्रैः पुत्राः । गोत्रिणो वा । अन्यो ब्राह्मणो वा । अग्निं दीपयंति । अस्मात्त्वमभिजातो ऽसि त्वदयं जायतां पुनः (cf. sū. 30) अमुकसगोत्रः । अमुकप्रेतः । स्वर्गाय लोकाय स्वाहा (cf. sū. 31) । स्त्री चेत् । गोत्रा । प्रेता (i. e. अमुकसगोत्रा, etc.) । इति दहनविधिः समाप्तः; Ath. Paddh. deals with this sūtra essentially as the Kāuçika, but like the Antyeṣṭi. employs मैनमग्न इति चतसृभिः (xviii. 2. 4-7) and प्रजानत्येका (xviii. 3. 4.). — [4] Ch Ku E याम्यान्हो°. — [5] K होमान्; Bū Bh Ku Ch (prim. man.) होमां. — [6] xviii. 1. 49. — [7] xviii. 1. 50; the word द्वे is wanting in B. — [8] This word is wanting in K Bh. — [9] xviii. 1. 58. — [10] xviii. 3. 13; 2. 49. — [11] K घृतवज्जुहोतींद्रो· — [12] xviii. 1. 41, 42, 43; vii. 68. 1, 2; xviii. 3. 25. — [13] K Bh वा (अपि); the rest वा(पि). —

ष्ठात्यः । ४३ । मैनमग्ने वि दह इतिप्रभृत्यव सृजेति वर्जयित्वा सहस्रनीथा इत्यातः[1] । ४४ । आ रोहत जनित्रीं जातवेदस इति पञ्चदशभिराहिताग्निम्[2] । ४५ । मित्रावरुणा परि मामधातामिति[3] पाणी प्रक्षालयते । ४६ । वर्चसा[4] मामित्याचामति । ४७ । विवस्वान्[5] इत्युत्तरतो ऽत्यस्मिन्ननुष्ठाता जुहोति । ४८ । ॥ २ ॥ ॥ ८१ ॥

यवीयःप्रथमानि कर्माणि प्राङ्मुखानां यज्ञोपवीतिनां दक्षिणावृताम् । १ । अथैषां सप्तसप्त शर्कराः पाणिष्वावपते[6] । २ । तासामेकैकां सव्येनावाचीनहस्तेनावकिरन्तो ऽनवेक्षमाणा[7] व्रजन्ति[8] । ३ । अपाघेनानुमन्त्रयते[9] । ४ । सर्वे ऽयतो[10] ब्रह्मणो[11] व्रजन्ति । ५ । मा प्र गामेति[12] जपन्त[13] उदकान्ते व्यपाद्ये[14] जपन्ति[15] । ६ । पश्चादवसिञ्चति । ७ । उदुत्तममिति[16] ज्येष्ठः । ८ । पयस्वतीरिति[17] ब्रह्मोक्ताः[18] पिञ्जूलीरावपति[19] । ९ । शान्त्युदकेना-

---

[1] xviii. 2. 4–18, omitting verse 10; cf. Kāuç. 85. 26; 86. 17; 87. 30; 8. 10 (11). — [2] xviii. 4. 1–15. — [3] xviii. 3. 12. — [4] xviii. E reads द्रवत. — [5] xviii. 3. 61. — [6] Bū °वपति. — [7] K °वेक्षमाणा; Bū °देक्षमाणा. — [8] Ch E Bū Ku व्रजयेत्य(पावेना°). — [9] K अपाधेना°; Bi अपापाद्येना°; cf. D (schol.) to Kāuç. 42. 22, अप नः शोशुचदघमित्यपाघप्रतीक... (iv. 33.1). Perhaps अपाद्य is to be read both here and at 42. 22: the MSS. confuse घ and द्य hopelessly. — [10] Ku Ch E यतो. — [11] Ku Ch E Bū प्रह्मणो; the rest ब्राह्मणा; cf. Kāuç. 26. 4; 75. 13. — [12] xiii. 1. 59. — [13] K P जपन्त्यु°. — [14] So K Bh and Ch (sec. man.); Ku Ch (prim. man.) व्यद्यापाद्ये; E व्याद्यापाद्ये; P व्यापाद्ये; Bū घापाघे; cf. sū. 19. Is the word to be emended to अपाघे (or अपाद्ये, sc. सूक्ते): the two hymns iv. 33–34? cf. अपाघेन (अपाद्येन?), sū. 4. — [15] Ku Ch E Bū जपति. — [16] xviii. 4. 69. — [17] xviii. 3. 56 (et al). — [18] E ब्राह्मणोक्ताः; Bū ब्रह्मोक्ताः. — [19] Ch Ku पिञ्जूलीभि°; E पिञ्जुलिभि°. —

चम्याभ्युक्ष्याश्वावतीमिति[1] नदीं तारयते[2] । १० । नक्षत्रं दृष्ट्वोपतिष्ठते नक्षत्राणां मा संकाशश्च प्रतीकाशश्चावतामिति[3] । ११ । शाम्याकीः[4] समिध आधायाग्रतो[5] ब्रह्मा जपति । १२ ।

यस्य त्वया गतमनुप्रयन्ति[6] देवा मनुष्याः पशवश्च सर्वे[7]।
तं नो[8] देवं मनो अधि ब्रवीतु[9] सुनीतिर्नो[10] नयतु[11]
द्विषते[12] मा रधामेति[13]

शान्त्युदकेनाचम्याभ्युक्ष्य[14] । १३ । निस्सालामिति[15] शालानिवेशनं संप्रोक्ष्य । १४ । ऊर्जं बिभ्रदिति[16] प्रपादयति[17] । १५ । नदीमालम्भयति[18] गामग्निमश्मानं च । १६ । यवो ऽसि यवयास्मद्द्वेषो[19] यवयारातिमिति[20, 21] यवान् ।१७। खल्वकास्येति[22] खल्वान्खलकुलांश्च[23] । १८ । व्यपाद्याभ्यां[24] शाम्याकीराधापयति । १९ । तासां धूमं भक्षयन्ति[25] । २० ।

---

[1] xviii. 2. 31. — [2] P Bh तारयति; cf. Kāuç. 86. 27. — [3] Cf. Vāit. Sū. 11. 13. — [4] K Ch (prim. man.) °काः; Bh Ch (sec. man.) °का. — [5] Bū E आदाया° — [6] Ch °यन्ते. — [7] The colon in Bi only. — [8] So emended; MSS. तन्नो — [9] So Bū; E ब्रवीति; K P Bh Bi Ch ब्रवीत्सु°. — [10] So emended; K Bū E Ch गुनीतिनो; P Bh सुनोतुनो; Bi सुनानुतिनो; Ku सुनोनो. — [11] So Ch; Bū E न एतु; K P Bh Bi न एति; cf. Kāuç. 74. 19; 135. 9. — [12] K द्विपतो. — [13] Not found in any known Saṁhitā. — [14] Ch E °भ्युच्च. — [15] ii. 14. 1. — [16] vii. 60. 1. — [17] K पादयति; Bi प्रतिपा°. — [18] Bū नांदीमा°. — [19] K Bū Bi E Ku °स्मद्वेषो; P °स्मद्विषो. — [20] K यवया अरातीरिति; cf. the versions of the verse cited in the next note. — [21] Cf. VS. v. 26; Gobhila's Çrāddhakalpa ii. 9; Yājñav. i. 230. — [22] Bū खल्वकस्येति; is it to be emended to खल्वकासीति? Cf. the mantra in the preceding sūtra. — [23] K °कुलंश्च. — [24] So K P Bh Bi; Ch E Bū व्यद्यापाद्याभ्यां; Ku व्यद्यापादाभ्यां. For द्य read perhaps घ; cf. sūtras 4 and 6. — [25] K भच्चयति. —

यद्यत्क्रव्याद्गृह्येद्यदि[1] क्रव्यादा[2] नान्ते[3] ऽपरेद्युः[4]।
दिवो[5] नभः शुक्रं पयो[6] दुहाना इषमूर्जं पिन्वमानाः ॥
अपां योनिमपाध्वं स्वधा याश्चकृषे जीवंस्तास्ते[7] सन्तु मधुश्चुत[8,9] इत्यग्नौ स्थालीपाकं निपृणाति । २१ । आदहने चापि[10] वान्यवत्सां[11] दोहयित्वा तस्याः पृष्ठे जुहोति वैश्वानरे हविरिदं जुहोमीति[12] । २२ । तस्याः पयसि । २३ । स्थालीपाक इत्येके । २४ । ये अग्नय इति[13] पालाश्या दर्व्या मन्थमुपमथ्य काम्पीलीभ्यामुपमन्थनीभ्यां तृतीयस्यामस्थीन्यभिजुहोति । २५ । उप द्यां[14] शं ते नीहार इति[15] मन्त्रोक्तान्यवदाय[16] । २६ । क्षीरोत्सिक्तेन[17] ब्राह्मणस्याव-

---

[1] So K P Bh Bi; Ku °दुह्येद्यदि; E °नृहेद्यदि; Bū °नृह्ये यदि; Ch °नृह्योद्यदि. — [2] Bū Ku Ch E क्रव्या. — [3] MSS. नांते (for नाङ्क्ते?). — [4] MSS. without avagraha. The entire line seems hopelessly corrupt. — [5] Bū दिव्यो. — [6] Wanting in Ch Ku E P Bh. — [7] So Ch (prim. man.); Bū जीवन्ता°; Ku जीघंवंतास्ते; K E P Bi Bh Ch (sec. man.) जोवंता°. — [8] K °श्च्युत; Bū °स्नुत. — [9] The passage from स्वधा occurs in xviii. 2. 20[c], but note the सकलपाठ. — [10] E Bū वापि; Bi चोपि. — [11] Bū °वशां; E °वश्नां; P Bh °वत्सां गां; cf. Kāuç. 80. 25. — [12] xviii. 4. 35. — [13] iii. 21. 1. — [14] Ch adds उप वेतसं (the words following the pratika). — [15] xviii. 3. 5, 60. — [16] Antyeṣṭi. and Ath. Paddh. to this and the following sūtra, अथ तृतीये ऽहनि चतुर्थे वा अस्थिसंचयनं कुर्यात् । उप द्यामिति द्वाभ्यां च (xviii. 3. 5, 6) हिरण्यपाणिमिति तिसृभिः (iii. 21. 8-10; cf. Kāuç. 71. 8) । शं ते नीहार इत्येकया मंत्रोक्तानामोषधीनां उदकं चीरं चैकत्र कृत्वा ब्राह्मणस्यास्थीनि सिंचति । मधूत्सिक्तेन चचियक्षोदकेन विश्वस्य । मंत्रोक्ता ओषधीरुच्यते (!) । शमीशाखा । दुग्ध । शतपत्र । पलाशपत्र । वेतसश्च । कर्णश्च । नदीफेनं च (Ath. Paddh. सीसं च; cf. Kāuç. 8. 16) । अवका च । अगुरु । हेरुका च । बृहद्दूर्वा च आकाशफेनं च । मण्डूकपर्णो च । मुक्तिका च (Ath. Paddh. सूक्तिकं च) । एता मंत्रोक्ता ओषधयः. — [17] Ch Bi चीरोत्सि°. —

सिञ्चति[1] मधूत्सिक्तेन क्षत्रियस्योदकेन वैश्यस्य । २७। अव सृजेत्यनुमन्त्रयते[2] । २८ । मा ते मनो यत्ते अङ्गमिति[3] संचिनोति[4] पच्छः[5] । २९ । प्रथमं शीर्षकपालानि । ३० । पश्चात्कलशे समोप्य सर्वसुरभिचूर्णैरवकीर्योत्थापनीभिरुत्थाप्य हरिणीभिर्हरेयुः[6] । ३१ । मा त्वा वृक्ष इति[7] वृक्षमूले निदधाति[8] । ३२ । स्योनास्मै भवेति[9] भूमौ त्रिराचमरसाशिनः कर्माणि कुर्वते[10,11] । ३३ । दशरात्र इत्येके । ३४ । यथाकुलधर्मं वा[12] । ३५ । ऊर्ध्वं तृतीयस्या[13] वैवस्वतं स्थालीपाकं श्रपयित्वा विवस्वान्न इति[14] जुहोति । ३६ । युक्ताभ्यां[15] तृतीयाम् । ३७ । आनुमतीं चतुर्थीम् । ३८ । शेषं शान्त्युदकेनोपसिच्याभिमन्त्य प्रा-

---

[1] Ch E Bü and Ath. Paddh. ब्राह्मणस्य सिञ्चति. — [2] xviii. 2. 10; K Ch Ku P Bh read अवसिञ्चत्यनु°; Antyeṣṭi. ततः अस्थीन्यभिमन्त्रयेत् । अव सृज etc. — [3] xviii. 2. 24, 26 (et al.). — [4] Antyeṣṭi. अस्थीन्यभिमंत्र्य कलशे निदधाति । पलाशपत्रेण. — [5] K P Bh Ch (prim. man.) पत्सः; Ch (sec. man.) पत्शः; Bü पत्तः; E पत्युः; Antyeṣṭi. पत्तः पादतः. — [6] Antyeṣṭi. पश्चात्सर्वचूर्णानि कलशे निदधाति कलशमुत्थाप्य । उत्तिष्ठ etc. (xviii. 3. 8) । प्र च्यवस्व etc. (xviii. 3. 9) । उदन्वती etc. (xviii. 2. 48) । इत एत etc. (xviii. 1. 61) । अग्नीषोमा etc. (xviii. 2. 53) । इदं पूर्वं etc. (xviii. 4. 44) । अनेन मंत्रेण कलशमुत्थाप्य । अति द्रव etc. (xviii. 2. 11—18) । एताभिर्ऋग्भिः । हरणीभी (!) । अभिमंत्र्य. Cf. Kāuç. 80. 35; 83. 20; 84. 13. The gaṇamālā (Ath. Pariç. 34. 25) also contains an उत्थापनगण, which exhibits however a very different set of pratīkas; see Kāuç. 41. 8. — [7] xviii. 2. 25. — [8] Antyeṣṭi. कलशं मूले निखनयति. — [9] xviii. 2. 19. — [10] E Ku Ch (sec. man.) कुर्वन्ति; Ch (prim. et tert. man.) and the rest, as above. — [11] Antyeṣṭi. स्योना etc. । इति मंत्रेण मृन्मयकुम्भं खातमध्ये निक्षिप्य । तस्योपरि मृत्तिकां पूरयेत् । तस्योपरि पिण्डदानं कर्तव्यं. — [12] Ch E घो(र्ध्वं). — [13] So Ku Bü; K E P Bi Bh तृतीयस्या(दिवस°); Ch तृतीयास्या(दिवस°). — [14] xviii. 3. 61. — [15] xviii. 3. 61, 62. —

शयति । ३९ । आ प्र च्यवेथामिति[1] गावावुपयच्छति[2] । ४० । एयमगन्निति[3] दशगवावरार्ध्या दक्षिणा । ४१ । द्वादशरात्रं कर्ता यमव्रतं चरेत् । ४२ । एकचैलस्त्रिचैलो वा । ४३ । हविष्यभक्षः । ४४ । सायंप्रातरुपस्पृशेत् । ४५ । ब्रह्मचारी व्रत्यधः शयीत[4] । ४६ । स्वस्त्ययनानि प्रयुञ्जीत[5] । ४७ । ॥ ३ ॥ ॥ ८२ ॥

पितॄन्निधास्यन्संभारान्संभरति[6] । १ । एकादश चरूंश्चक्रकृतान्कारयति[7, 8] । २ । शतातृण्णसहस्रातृण्णौ[9, 10] च पाशीमूषं[11, 12] सिकताः शङ्खं[13] शालूकं सर्वसुरभिशमीचूर्णकृतं शान्तवृक्षस्य नावं त्रिपादकम् । ३ । द्वे निःशीयमाने नीललोहिते[14] सूत्रे सव्यरज्जुं शान्तवृक्षस्य चतुरः शङ्कूंश्चतुरः परिधीन्वारणं शामीलमौदुम्बरं पालाशं वृक्षस्य[15] शान्त्यौषधीः[16] । ४ । माघे[17] निदध्यान्माघं[18] भूदिति । ५ ।

---

[1] xviii. 4. 49. — [2] So Ku Bū; E गावा उप°; K P Bh Bi Ch (sec. man.) गावोनुपयक्षन्य(ायमगन्निति); Ch (prim. man.) गावावुपय°. — [3] xviii. 4. 50. — [4] Bi शयान. — [5] Cf. Kāuç. 25. 36, and note. — [6] Ch E Bū °धास्यं. — [7] P Bh here insert the words न भवत्ये(का-दश). — [8] So emended hesitatingly; K चरून्चकृशतान्कारयति, with the syllable कृ cancelled; Bū चरूनचक्रकृता°; Ch चरून्चक्रकृता°; E चरून-वक्रकृता°; P Bh चरून्वक्रकृता°; Ku चरूनचक्रकृतान्; Bi चरूनवक्र-कृतीन्. Cf. Yājñav. iii. 146. — [9] So emended; K Ch Ku E P Bh Bi शता-तृण्ण°; Bū शतातृण°. — [10] So emended; K P Bh Bi सहस्रतृण्णौ; Ch °सह-स्रतृणौ; Ku Bū सहस्रा°; E °सहस्राण्यतृण्णो. — [11] K B पाश्रा°; P Bh पासी°; E पाणी°; cf. Kāuç. 85. 19. — [12] K P Bh °मूप; Ku Ch (sec. man.) °मूपकं. — [13] K Bh शंङ्ख. — [14] K °लोहित°. — [15] Bū दयास; Bi वृचद्वाया. — [16] So emended; Ch Ku शान्त्यौषधीः, perhaps for शान्त्या ओषधीः (with double sandhi), cf. the introduction; the rest शान्त्यो°. Cf. Kāuç. 8. 15, 16. — [17] K Ch (prim. man.) मायो; Bh Ch (sec. man.) मापो. — [18] K Bh Ch (sec. man.) °न्मायं. —

शरदि निदध्याच्छाम्यत्वघमिति । ६ । निदाघे निदध्यान्निदह्यतामघमिति । ७ । अमावास्यायां निदध्यादमा हि पितरो भवन्ति[1] । ८ । अथावसानम् । ९ । तद्यत्समं समूलमविदग्धं[2] प्रतिष्ठितं प्रागुदक्प्रवणम् । १० । यत्राकण्टका वृक्षाश्चौषधयश्च । ११ । उन्नतं[3] स्वर्गकामश्च[4] । १२ । श्वो ऽमावास्येति गां[5] कारयते[6] । १३ । तस्याः सव्यं चापघनं[7] प्रपाकं च निधाय[8] । १४ । भिक्षां[9] कारयति[10] । १५ । यामे यामसारस्वतान्होमान्हुत्वा[11] । १६ । संप्रोक्षणीभ्यां काम्पीलशाखया निवेशनमनुचर्य । १७ । प्राग्दक्षिणं[12] शाखां प्रविध्य सीरेण कर्षयित्वा शाखाभिः परिवार्य[13] । १८ । पुनर्देहीति[14] वृक्षमूलादादत्ते । १९ । यत्ते कृष्ण इति[15] भूमेर्वसने समोप्य[16] सर्वसुरभिचूर्णैरवकीर्योत्थापनीभिरुत्थाप्य हरिणीभिर्हरेयुः[17] । २० । अविदन्तो देशात्पांसून्[18] । २१ । अपि वोदकान्ते वसनमास्तीर्यासाविति ह्वयेत्[19] । २२ । तत्र यो जन्तुर्निपतेत्तमुत्थापनीभिरुत्थाप्य[20]

---

[1] Ch भवति. — [2] Bi सप्रमूल°. — [3] P Bh (°षधय)श्चोन्नतं. — [4] Bū Ku Ch स्वर्गकामस्य. — [5] K P Bh स्त्रिगां. — [6] K कारयति. — [7] Ch चापद्यनं; E वापचनं. — [8] So Bū E; Ku निधानाय; the remaining MSS. निधनाय. The latter reading may be a corruption due to the subject matter: निधान 'death'. — [9] So Bū; K P Bh भिचा न; Ku भिचां न; the rest भिचान्का°. — [10] P Bh यंति. — [11] Ch here inserts कृत्वा. — [12] P Bh °णां. — [13] Ch परिचर्यं; wanting in Bi. — [14] xviii. 3. 70. — [15] xviii. 3. 55. — [16] K समाप्य. — [17] For the उत्थापनी and हरिणी verses see sū. 23 and Kāuç. 80. 35; 82. 31; 84. 13. — [18] K P Bh विदन्तो देशाभ्यांसून्. — [19] E Bi ऊयेत्. — [20] Ch योर्जंतु तिप°; K E P Ku Bi Bh योजंनु निप°; only Bū as above. —

हरिणीभिर्हरेयुः[1]।२३।अपि वा त्रीणि षष्टिशतानि पलाशत्सरूणाम्[2]। २४ । ग्रामे दक्षिणोदग्द्वारं विमितं[3] दर्भैरास्तारयति । २५ । उत्तरं जीवसंचरो दक्षिणं पितृसंचरः । २६ । अनस्तमित आ[4] यातेत्यायापयति । २७ । आच्या[5] जान्वित्युपवेशयति । २८ । सं विशन्त्विति[6] संवेशयति[7] । २९ । एतद्वः पितरः पात्रमिति[8] त्रीण्युदकंसान्निनयति । ३० । त्रीन्स्नातानुलिप्तान्ब्राह्मणान्मधुमन्थं पाययति । ३१ । ब्रह्मणे मधुपर्कमाहारयति[9] । ३२ । गां वेदयन्ते[10] । ३३ । कुरुतेत्याह । ३४ । तस्या[11] दक्षिणमर्धं[12] ब्राह्मणान्भोजयति सव्यं पितृन् । ३५ । ॥ ४ ॥ ॥ ८३ ॥

वह वपां जातवेदः पितृभ्यो यत्रैतान्वेत्थ निहितान्पराके ।
मेदसः कुल्या उप तान्स्रवन्तु[13] सत्या एषामाशिषः सन्तु कामाः[14]

स्वाहा स्वधेति वपायास्त्रिर्जुहोति । १ । इमं यमेति[15]

---

[1] For the उत्थापनी and हरिणी verses see sū. 20. — [2] Cf. for this sūtra Kāty. Çr. xxv. 8. 15; Çāñkh. Çr. iv. 15. 9. — [3] Bū विमितिं. — [4] xviii. 4. 62. — [5] xviii. 1. 52. — [6] xviii. 2. 29. — [7] Ch Bū संवेशयस्वेति. — [8] Cf. VS. ii. 32[b]; Viṣṇusmṛti 73. 12. — [9] Bū °माहारयिष्यन्; cf. Kāuç. 90. 1. — [10] Bū वेदयते. — [11] Ch तस्याः; Bū तस्य. — [12] P Bi दक्षिणाम°. — [13] So Bū and VS. xxxv. 20; K P B Bh ताः; E Ku Ch (sec. man.) ता; Ch (prim. man.) तँ. — [14] See Kāuç. 45. 14, and cf. VS. xxxv. 20; Āçv. Gṛ. ii. 4. 13; Çāñkh. Gṛ. iii. 13. 3; Pār. Gṛ. iii. 3. 9; Gobh. iv. 4. 22; Mantrabr. ii. 3. 16. — [15] xviii. 1. 60. —

यमाय चतुर्थीम् । २ । एकविंशत्या यवैः कृशरं[1] रन्धयति युतमन्यत्रपाकं च । ३ । सयवस्य[2] जीवाः प्राश्नन्ति । ४ । अथेतरस्य पिण्डं निपृणाति । ५ । य ते मन्थमिति[3] मन्त्रोक्तं विमिते[4] निपृणाति । ६ । तदुन्नतोष्महर्तारो[5] दासा भुञ्जते[6] । ७ । वीणा वदन्त्वित्याह[7] । ८ । महयन्त[8] पितॄनिति रिक्तकुम्भं[9] विमितमध्ये[10] निधाय तं[11] जरदुपानहाघ्नन्ति[12] । ९ । कस्ये मृजाना इति[13] त्रिः[14] प्रसव्यं प्रकीर्णकेश्यः[15] परियन्ति दक्षिणानूरूनाघ्नानाः । १० । एवं मध्यरात्रे ऽपररात्रे च । ११ । पुरा विवाहात्समांसः[16] पिण्डपितृयज्ञः । १२ । उत्थापनीभिरुत्थाप्य हरिणीभिर्हरेयुः[17] । १३ । अथावसायेति पश्चात्पूर्वकृतेभ्यः पूर्वाणि पूर्वेभ्यो ऽपराणि[18] यवीयसाम् । १४ । प्राग्दक्षिणां[19] दिशमभ्युत्तरामपरां दिशमभितिष्ठन्ति[20] । १५ । यथा चितिं[21] तथा श्मशानं दक्षिणापरां दिशमभिप्रवणम् । १६ । ॥ ५ ॥ ॥ ८४ ॥

---

[1] Bū कृसरं; the rest कृशरं; cf. Kāuç. 66. 16. — [2] So Ch E Ku; the rest यवस्य. — [3] xviii. 4. 42. — [4] So Bū (cf. 80. 9, and 83. 25); the rest विमितं. — [5] E °न्नतोहर्तारो; Ku Ch (prim. man.) °न्नतोमहर्तारो; Bi °न्नताष्महर्तारो. — [6] K P Bi Bh भुञ्जन्ति. — [7] K P Bh वाद°. — [8] Ch महयन्त. — [9] So Bū; K P Bi Bh ऋक्त°; Ch Ku E रक्त°. — [10] K P Bh विमितं. — [11] E Ch (prim. man.) निधारयत; Ch (sec. man.) निधापय°. — [12] Ch °पनहघ्नेति; E °पानहघ्नेमि. — [13] xviii. 3. 17. — [14] Bū त्रिष्प्र°. — [15] K प्रकीर्ण — [16] Bū विचासान्स°; Ch विवाहान्स°; P विवाहां स°; E विवाहसान्. — [17] For the उत्थापनी and हरिणी verses see Kāuç. 80. 35; 82. 31; 83. 20, 23. — [18] K परणी. — [19] E प्राग्दक्षिणानां; Bi प्राङ्दक्षिणां; P प्रदक्षिणापरां; Bh प्रदक्षिणां. — [20] Bū °भिनिस्तिष्ठंति; K Bh °भिस्तिष्ठन्ति. — [21] Bū चिनिं; Ku वित्तं; Ch चितं; E चिंतिं. —

अथ मानानि । १ । दिष्टिकुदिष्टिवितस्तिनिमुष्ट्यरत्निपदप्रक्रमाः[1, 2, 3] । २ । प्रादेशेन धनुषा चेमां[4] मात्रां मिमीमह इति[5] । ३ । सप्त दक्षिणतो मिमीते सप्तोत्तरतः पञ्च[6] पुरस्तात्त्रीणि पश्चात् । ४ । नव दक्षिणतो मिमीते नवोत्तरतः सप्त पुरस्तात्पञ्च पश्चात् । ५ । एकादश दक्षिणतो मिमीत एकादशोत्तरतो नव पुरस्तात्सप्त पश्चात् । ६ । एकादशभिर्देवदर्शिनाम्[7] । ७ । अयुग्ममानानि परिमण्डलानि चतुरस्राणि वा शौनकिनाम् । ८ । तथा हि दृश्यन्ते । ९ । यावान्पुरुष[8] ऊर्ध्वबाहुस्तावानग्निश्चितः[9, 10] । १० । सव्यानि दक्षिणाद्वाराण्ययुग्मशिलान्ययुग्मेष्टिकानि[11] च[12] । ११ । इमां मात्रां मिमीमह इति[13] दक्षिणतः सव्यरज्जुं मीत्वा । १२ । वारयतामघमिति वारणं परिधिं[14] परिदधाति[15] शङ्कुं च निचृतति[16] । १३ । पुरस्तान्मीत्वा शमेभ्यो ऽस्त्वघमिति[17] शामीलं परिधिं परिदधाति[18] शङ्कुं

---

[1] K वितस्ती; Bü वितस्मि. — [2] Bü निमुष्टिरत्नि; Ch (prim. man.) निर्मुष्यरत्नि; Ch (sec. man.) निमुष्यरत्नि; E निमुष्टवर्रत्नि. — [3] Bü पद्क्रमा:. — [4] Bü वेमां. — [5] xviii. 2. 38. — [6] K omits the passage beginning here and ending with the word पञ्च in the next sûtra. — [7] K P द्वेवदर्शनाम्. — [8] Ch Ku यावत्पु°; Bb यावा. — [9] So (°स्तावान°) emended; K P Bi Bh °स्तावान्न°; Bü Cb E Ku °स्तावद°. — [10] Thus emended; Bü °ग्निचित; P Bi °सिंचितः; the rest °ग्निचितः. — [11] K E °शिलीण्य°; Ch P °शिलाण्य°. — [12] Bü वे(मां). — [13] xviii. 2. 38. — [14] This word is wanting in K — [15] E परिददाति; K P परिहंति; Ku परिदति; Bi परिति. — [16] Bü Ku निवृतति — [17] So Ch E Ku Bü; K P Bh Bi त्वघमिति. — [18] Ch Ku E परिददातिः so also in the next sûtras. —

च निचृतति[1]। १४। उत्तरतो मीत्वा शाम्यत्वघमित्यौदुम्बरं[2] परिधिं परिदधाति शङ्कुं च निचृतति। १५। पश्चान्मीत्वा शान्तमघमिति[3] पालाशं परिधिं परिदधाति शङ्कुं च निचृतति[4]। १६। अमासीत्यनुमन्त्रयते[5]। १७। अक्ष्णया[6] लोहितसूत्रेण निबध्य। १८। स्तुहि श्रुतमिति[7] मध्ये गर्तं खात्वा पाशिसिकतोपोदुम्बरशङ्खशालूकसर्वसुरभिशमीचूर्णानि[8, 9, 10, 11] निवपति। १९। निःशीयतामघमिति निःशीयमानमास्तृणाति। २०। असंप्रत्यघम्[12]। २१। वि लुम्पतामघमिति परि चैलं[13] दूर्शं विलुम्पति। २२। उक्तो होमो दक्षिणत[14] स्तरणं च। २३। एतदा रोह ददामीति[15] कनिष्ठो निवपति। २४। एदं बर्हिरिति[16] स्थितसूनुर्यथापरु[17, 18] संचिनोति[19]। २५। मा ते मनो यत्रे अङ्गमिन्द्रो मोदपूरित्यातो[20, 21, 22] ऽनुमन्त्रयते। २६। धानाः सलिङ्गाभिरावपति[23, 24]। २७। ॥ ६ ॥ ॥ ८५ ॥

---

[1] Bü Ku निवृतति: so also in the next sûtras. — [2] E शाम्यत्व°. — [3] P शाम्यमघमिति; Bi शाम्यत्वघमिति. — [4] This sûtra is wanting in K. — [5] xviii. 2. 45. — [6] Bü यक्षणया. — [7] xviii. 1. 40. — [8] So (पाशि°) all MSS.; cf. Kāuç. 83. 3. — [9] E Ch (prim. man.) (पाशि) शिकतो°; Cb (sec. man.) °शितो°. — [10] All MSS. except Bü Ku omit the syllable °पो°; cf. the word ऊपं in Kāuç. 83. 3. — [11] K °शालूकं; P Bh °सालूकं. — [12] So emended hesitatingly: P Bi Bh Ku °प्रत्यगं; K Ch E Bü °प्रत्वगं. — [13] Ch परिशिलं; Ku परिशिलं. — [14] Bü °तः — [15] xviii. 3. 73; 2. 37. — [16] xviii 4. 52 (et al.). — [17] Ch E स्थितस्तनु°; cf. the word तन्वं in xviii. 4. 52. — [18] So emended; K यथापुरु; the rest यथापरुः; cf. Kāuç. 64. 10. — [19] Cf. Kāuç. 82. 29. — [20] So (अङ्गमिन्द्रो मोदपूरित्यातो) only Bü; E °न्द्रो मा मारुत्वोदपूरित्यातो (cf. xviii. 3. 25); K Ch Ku P Bi °न्द्रस्त्वोदपूरित्यातो. — [21] xviii. 2. 24, 26; 3. 25–37. — [22] For इत्यातो cf. Kāuç. 81. 44; 86. 17. — [23] K सलिङ्गानिरा°. Cf. xviii. 3. 69; 4. 26, 43; 4. 32 fg. — [24] Ch E °वपते; K Bi Bh °वपंति. —

इदं कसाम्बिति[1] सजातानवेक्षयति । १ । ये च जीवा ये ते पूर्वे परागता इति[2] सर्पिर्मधुभ्यां चरुं[3] पूरयित्वा शीर्षदेशे निदधाति । २ । अपूपवानिति[4] मन्त्रोक्तं दिक्ष्वष्टमदेशेषु निदधाति । ३ । मध्ये पचन्तम्[5] । ४ । सहस्रधारं शतधारमित्यद्भिरभिविष्यन्द्य[6, 7] । ५ । पर्णो राजेति[8] मध्यमपलाशैरभिनिदधाति[9] । ६ । ऊर्जो भाग[10] इत्यश्मभिः । ७ । उत्ते स्तभ्नामीति[11] लोगान्यथापरु[12, 13] । ८ । निःशीयताममघमिति निःशीयमानेनावछाद्य दर्भैरवस्तीर्य । ९ । इदमिद्वा उ नोप सर्पासौ हा इति[14] चिन्वन्ति । १० । यथा यमायेति[15] संश्रित्य[16] । ११ । मृणात्वघमित्युपरिशिर[17] स्तम्बमादधाति । १२ । प्रतिषिद्धमेकेषाम् । १३ । अकल्माषाणां[18] काण्डानामष्टाङ्गुलीं[19, 20] तेजनीमन्तर्हितमघमिति[21] ग्रामदेशादुच्छ्रयति[22] । १४ । प्रसव्यं परिषिच्य कुम्भा-

---

[1] xviii. 4. 37. — [2] xviii. 4. 57; 3. 72. — [3] Bū Ch E चरू; K च चरु — [4] xviii. 4. 16. — [5] So K P Bh; Ku पंचतं; Ch Bū पवन्तं; E वपन्तं; Bi एवं तं. — [6] xviii. 4. 36 (P omits the word शतधारं). — [7] Ch E P Bi Bh °ष्पंद्य. — [8] xviii. 4. 53. — [9] For मध्यमपलाश cf. Kāuç. 21. 2. — [10] xviii. 4. 54. — [11] xviii. 3. 52. — [12] So Bū; Ch Ku Bh लोकांन्य°; KEPBi लोकान्य°. — [13] Thus emended; E °परं; the rest °परु. — [14] xviii. 2. 50; 3. 49; 4. 66; P Bi सर्प मातारमिति (continuing the second pratika, and omitting the third). — [15] xviii. 4. 55. — [16] So Ku; Bi संश्रेत्य; E Ch (sec. man.) संस्रंत्य; Ch (prim. man.) संश्रंत्य; K P Bh संस्रेत्य; Bū संघ्रंत्य. — [17] P Bh °शिरः. — [18] So Bū Ku; K (°केषांम) कल्माखानां; Ch (°केषां) कल्माखाणां; the rest (°केषां) कल्मापाणां. — [19] E काष्ठानाम°. — [20] Thus emended; K Ch E P Bi Ku °ष्टांगुदीं; Bū Bh °ष्टागुदी. — [21] K Ch °हिताम°. — [22] So Ch Ku E (cf. Kāty. Çr. xxi. 3. 27); K P Bi Bh °देशा उछ्रयति; Bū °देशावुदुछ्रयति. —

ग्भिन्दन्ति[1,2]। १५। समेतेत्यपरस्यां[3] श्मशानसक्त्यां ध्रुवनान्युपयच्छन्ते[4,5]। १६। पश्चादुत्तरतो ऽग्नेर्वर्चसा[6] मां विवस्वानिन्द्र क्रतुमित्यातः[7]। १७। समिन्धत[8] इति पश्चात्संकसुकमुद्दीपयति। १८। अस्मिन्वयं यद्रिप्रं सीसे मृड्ढ्वमित्यभ्यवनेजयति[9,10]। १९। कृष्णोर्णया पाणिपादान्निमृज्य[11]। २०। इमे जीवा उदीचीनैरिति[12] मन्त्रोक्तम्।२१। त्रिः सप्तेति[13] कूद्या पदानि योपयित्वा[14] श्मशानात्[15]।२२। मृत्योः पदमिति[16] द्वितीयया नावः। २३। परं मृत्यो इति[17] प्राग्दक्षिणं कूदीं प्रविध्य। २४। सप्त नदीरूपाणि कारयित्वोदकेन पूरयित्वा। २५। आ रोहत सवितुर्नावमेतां सुत्रामाणं महीमू ष्विति[18] सहिरण्यां सयवां नावमारोहयति। २६। अश्मन्वती रीयत उत्तिष्ठता प्र

---

[1] So Bū only; Ch (sec. man.) कुम्भां; K E P Ku Bi Bh Ch (prim. man.) कां (! for कुम्भिकां?). — [2] K P Bh भिदंति; Ch भिंदति. — [3] Thus emended so as to yield the pratīka of vii. 21. 1; Ch Bū Ku शमेतेत्य°; E शमयम इत्य°; K P Bi Bh शमोत्य°. — [4] K P Ch Bh ध्रुवा°. — [5] So Bū Ku; Ch °नांन्युपयछंते; K P Bh °नान्यपयच्छते; Bi °नान्युपयच्छते; E°नान्युवपर्यछंते. — [6] Bū पश्चादुपतिष्ठंते वर्चसा. — [7] xviii. 3. 10; 61-67; cf. Kāuç. 81. 44; 85. 26. — [8] xviii. 4. 41 (et al.). — [9] xii. 2. 13, 40, 19; MSS. मृढ्ढम्. — [10] The passage beginning here, and continued to sū. 27, occurs also with slight modifications in Kāuç. 71. 16-24. — [11] Bū Bi निर्मृज्य. — [12] xii. 2. 22, 29. — [13] xii. 2. 29c. — [14] So emended in accordance with xii. 2. 29c, 30; Ch E Bū लोपयत्या; Ku लापयत्या; K P Bi Bh लोपयित्वा; cf. Kāuç. 71. 19. — [15] K श्मशानानां; Bū श्मशानं; Ch (prim. man.) श्मशानांन्मृ°; Ch (sec. man.) श्मशानांमृ°; E श्मशानान्नंदीभ्यो; Ku स्मशानान् । नदीभ्यो (cf. the last word in Kāuç. 71. 19). — [16] xii. 2. 30. — [17] xii. 2. 21. — [18] xii. 2. 48c; vii. 6. 3, 2. —

तरता सखाय[1] इत्युदीचस्तारयति । २७ । शर्कराद्या समिदाधानात्[2] । २८ । वैवस्वतादि समानम्[3] । २९ । प्राप्य गृहान्समानः[4] पिण्डपितृयज्ञः । ३० । ॥ ७ ॥ ॥ ८६ ॥

अथ पिण्डपितृयज्ञः । १ । अमावास्यायां सायं न्यह्नेऽहनि[5] विज्ञायते[6] । २ । मित्रावरुणा परि मामधातामिति[7] पाणी प्रक्षालयते । ३ । वर्चसा[8] मामित्याचामति[9] । ४ । पुनः सव्येनाचमनादपसव्यं[10] कृत्वा प्रैषकृतं[11] समादिशति । ५ । उलूखलमुसलं शूर्पं चरुं कंसं[12] प्रक्षालय[13] बर्हिरुदकुम्भमा हरेति । ६ । यज्ञोपवीती[14] दक्षिणपूर्वमन्तर्देशमभिमुखः शूर्प एकपवित्रान्तर्हितान्हविष्यान्निर्वपति । ७ । इदमग्नये कव्यवाहनाय[15] स्वधा पितृभ्यः पृथिविषद्भ्य[16] इतीदं[17] सोमाय पितृमते स्वधा पितृभ्यः सोमवद्भ्यः पितृभ्यो वान्तरिक्षसद्भ्य[18] इतीदं यमाय पितृमते स्वधा पितृभ्यश्च दिविषद्भ्य इति[19] त्रीनवाचीनकाशीन्निर्वपति[20, 21] । ८ ।

---

[1] xii. 2. 26, 27. — [2] See Kāuç. 82. 2-19. — [3] Cf. Kāuç. 82. 36. — [4] So Ku Bū Bi; E रहान्; Ch (prim. man.) मृहान्; K P Bh Ch (sec. man.) महान्. — [5] So Bū P Bh; K साय त्यह्ने हनि; Bi सोय न्यह्ने ह्नि; E सायान्ह्यपराण्हे हनि; Ku सायां न्ह्यपराह्णे ह्नि; Ch (prim. man.) सायं न्यन्य ह्नि; Ch (sec. man.) सायं न्यहनि; Ch (tert. man.) सायं न्ह्यपराह्णे ह्नि (cf. the reading of Ku E). — [6] Ch Ku °ति. — [7] xviii. 3. 12. — [8] xviii. 3. 10 (11). — [9] Ch °चमति. — [10] Bū E Bh Ch (sec. man.) °चमनापसव्यं; Ch (prim. man.) °चमनामपसव्यं; Ku. °चम॰लपसव्यं. Is the passage to be emended to सव्येनाचमनमपसव्यं? — [11] Ch °कृते. — [12] K P Bi Bh कांसं. — [13] E प्रचाल्य. — [14] Ku Ch E यज्ञोपवीति. — [15] Ch कव्यवाहनायेति; xviii. 4. 71. — [16] Ku E पृथिवी° (cf. Gobh. iv. 3. 10); xviii. 4. 78. — [17] So only Ch Ku E; the rest पृथिविषद्भ्य रदं. — [18] xviii. 4. 72, 73, 79. — [19] xviii. 4. 74, 80. — [20] Ch °वाचीं; E °वाचीन्. — [21] Bū E Ch Ku °काशीं; K °काशी; Bi °काशान्नि°. —

उलूखल ओप्य चिरवहन्तीदं वः पितरो हविरिति। ९। यथा हविस्तथा परिचरति। १०। हविर्ह्येव[1] पितृयज्ञः। ११। प्रैषकृतं समादिशति चरुं प्रक्षालयाधिश्रयाप[2] ओप्य तण्डुलानावपस्व नेक्षणेन योधयन्नास्व[3] मा शिरो ग्रहीः[4] । १२। शिरोग्रहं परिचक्षते[5]। १३। वाह्येनोपनिष्क्रम्य[6] यज्ञोपवीती दक्षिणपूर्वमन्तर्देशमभिमुख उदीरतामिति[7] कर्षूं खनति प्रादेशमात्रीं तिर्यगङ्गुरिम्[8]। १४। अवागङ्गुरिं पर्वमात्रीमित्येके[9]। १५। अपहता[10] असुरा रक्षांसि ये पितृषद इति[11] प्राग्दक्षिणं पांसूनुदूहति[12]। १६। कर्षूं च पाणी[13] च प्रक्षाल्यैतद्वः पितरः पात्रमिति कर्षूमुदकेन पूरयित्वा। १७। अन्तरुपातीत्य मस्तुना नवनीतेन वा प्रतिनीय दक्षिणाञ्चमुद्वास्य[14]। १८। द्वे काष्ठे गृहीत्वोशन्त[15] इत्यादीपयति। १९। आदीप्तयोरेकं प्रतिनिदधाति। २०। इहैवैधि धनसनिरित्येकं[16] हुत्वा[17]। २१। पांसुष्वाधायोपसमादधाति[18] ये निखाताः समिन्धते ये तातृषुर्ये सत्वास

---

[1] E हविस्तर्ह्येव. — [2] So K Bū E P Bh Ch (prim. man.); Ch (sec. man.) °अपया; Bi °अपंयो. — [3] So Bi; Bū Ku Ch योधयन्वास; E योधायन्वास्व; K योधयन्वस्म; P योधायन्वस्म. — [4] K P have a colon here. — [5] K P प्रतिचक्षते; Bi प्रचक्षते. — [6] E परिष्क्रम्य. — [7] xviii. 1.44. — [8] P B °ङ्गुर्लिं; E °ङ्गुरि. — [9] Ch पर्वमात्रमि°. — [10] E अपहुता. — [11] Cf. VS. ii. 29°; Kāty. Çr. iv. 1. 8; Āçv. Çr. ii. 6. 9; Çāñkh. Çr. iv. 4. 2; Āp. Çr. i. 7. 13; Gobh. iv. 3. 2. — [12] K Ch पांशू°. — [13] K Bū Bi पाणीं. — [14] E दक्षिणांच्यमु°. — [15] xviii. 1. 56. — [16] xviii. 4. 38. — [17] Bū Ch जुत्वा; Ku हत्वा. — [18] K पांसुष्वा°. —

इति[1]। २२। संभारानुपसादयति[2]। २३। पर्युक्षणीं बर्हि-रुदकुम्भं कंसं[3] दर्विमाज्यमायवनं चरुं वासांस्याञ्जनमभ्यञ्जनमिति। २४। यदत्रोपसमाहार्यं भवति तदुपसमाहृत्य। २५। अतो यज्ञोपवीती[4] पित्र्युपवीती बर्हिर्गृहीत्वा[5] विचृत्य संनहनं दक्षिणापरमष्टमदेशमभ्यवास्येत्। २६। बर्हिरुदकेन संप्रोक्ष्य[6] बर्हिषदः पितर उपहूता नः पितरो ऽग्निष्वात्ताः पितरो ये नः पितुः पितरो ये ऽस्माकमिति[7] प्रस्तृणाति। २७। आयापनादीनि त्रीणि[8]। २८। उदीरतामिति[9] तिसृभिरुदपात्राण्यन्वृचं निनयेत्। २९। अतः[10] पित्र्युपवीती[11] यज्ञोपवीती ये दस्यव[12] इत्युभयत आदीप्तमुल्मुकं त्रिः[13] प्रसव्यं परिहृत्य निरस्यति। ३०। पर्युक्ष्य। ३१। ॥ ८ ॥ ॥ ८७ ॥

ये रूपाणि प्रतिमुञ्चमाना असुराः सन्तः स्वधया चरन्ति।

त्वं तानग्ने अप सेध दूरान्सत्या[14] नः पितॄणां सन्त्वाशिषः[15]

---

[1] xviii. 2. 34; 4. 41 (et al.); 3. 47, 48. — [2] Ch ॰नपसादयति. — [3] K P कांसं. — [4] Bü ॰वीति. — [5] Bü बर्हि; Ku बर्हिर्गृ॰. — [6] The passage up to this word is wanting in K. — [7] xviii. 1. 51; 3. 45, 44, 46; 4. 68. — [8] See Kāuç. 83. 27–29. — [9] xviii. 1. 44–46. — [10] So Ch; K Ku Bü E P Bi (निनयेद्)रातः; cf. Kāuç. 88. 29. 86. 17. — रातः seems to be a reading contaminated by 81. 44; 85. 26; 86. 17. — [11] Bü Ku Ch ॰वीति. — [12] xviii. 2. 28. — [13] Bü Ch Ku त्रिप्र॰. — [14] K दूरात्स॰; Bü दुरं; the rest दूरां. — [15] Cf. VS. ii. 30; Kāty. Çr. iv. 1. 9; Āçv. Çr. ii. 6. 2; Çāṅkh. Çr. iv. 4. 5; Āp. Çr. i. 8. 7; Gobh. iv. 4. 3. —

स्वाहा स्वधेति हुत्वा कुम्भीपाकमभिघारयति। १। अग्नये कव्यवाहनायेति[1] जुहोति। २। यथानिरुप्तं[2] द्वितीयाम्। ३। यमाय पितृमते स्वधा पितृभ्य इति[3] तृतीयाम्। ४। यज्ञो अग्निरिति[4] सायवनांस्तण्डुलान्[5]। ५। सं बर्हिरिति[6] सदर्भांस्तण्डुलान्पर्युक्ष्य। ६। अतो यज्ञोपवीती[7] पित्र्युपवीती दर्व्योद्धरति। ७। द्यौर्दर्विरक्षितापरिमितानुपदस्ता सा यथा[8] द्यौर्दर्विरक्षितापरिमितानुपदस्तैवा[9] प्रततामहस्येयं दर्विरक्षितापरिमितानुपदस्ता। ८। अन्तरिक्षं दर्विरक्षितापरिमितानुपदस्ता सा यथान्तरिक्षं दर्विरक्षितापरिमितानुपदस्तैवा[10] ततामहस्येयं दर्विरक्षितापरिमितानुपदस्ता। ९। पृथिवी दर्विरक्षितापरिमितानुपदस्ता सा यथा पृथिवी दर्विरक्षितापरिमितानुपदस्तैवा[11] ततस्येयं दर्विरक्षितापरिमितानुपदस्तेति। १०। उद्धृत्याज्येन संनीय त्रीन्पिण्डान्संहतान्निदधात्येतत्ते प्रततामहेति[12]। ११। दक्षिणतः पत्नीभ्य इदं वः पत्न्य[13] इति। १२। इदमाशंसूनामिदमाशंसमानानां[14] स्त्रीणां पुंसां प्रकीर्णावशीर्णानां[15]

---

[1] xviii. 4. 71. — [2] K inserts here on the margin सोमाय पितृमतेति (!xviii. 4. 72: this is probably a gloss based upon Kāuç. 87. 8). — [3] xviii. 4. 74, 78. — [4] xviii. 4. 64. — [5] K Bü E P B सायवनंस°. — [6] vii. 98. 1. — [7] E °वीति. — [8] K omits the passage beginning here with the word द्यौर् and ending with यथा° in the next sūtra. — [9] E °वं; Bi °व. — [10] P °वं. — [11] K Ku Ch °वं. — [12] xviii. 4. 75. — [13] So emended; MSS. पत्न्या. — [14] K °शंसूनामि°. — [15] E °वकीर्णानां. —

येषां वयं दातारो ये चास्माकमुपजीवन्ति। तेभ्यः सर्वेभ्यः सपत्नीकेभ्यः स्वधावदक्षय्यमस्त्विति[1] त्रिः[2] प्रसव्यं तण्डुलैः परिकिरति। १३। पिञ्जूलीराञ्जनं[3] सर्पिषि पर्यस्याङ्क्ष्व[4] पितर इति न्यस्यति। १४। वङ्क्ष्व[5] पितरो मा वो ऽतो[6] ऽन्यत्पितरो योयुवतेति[7,8] सूत्राणि। १५। अञ्जते व्यञ्जत[9] इत्यभ्यञ्जनम्। १६। आज्येनाविच्छिन्नं पिण्डानभिघारयति ये च जीवा ये ते पूर्वे परागता इति[10]। १७। अत्र पितरो मादयध्वं यथाभागं यथालोकमावृषायध्वमिति[11]। १८। अत्र पत्न्यो मादयध्वं यथाभागं यथालोकमावृषायध्वमिति। १९। यो ऽसावन्तरग्निर्भवति तं प्रदक्षिणमवेक्ष्य तिस्रस्तामीस्ताम्यति। २०। प्रतिपर्यावृत्यामीमदन्त पितरो[12] यथाभागं यथालोकमावृषायिषतेति[13,14]। २१। अमीमदन्त पत्न्यो यथाभागं यथालोकमावृषायिषतेति[15]। २२। आपो[16] अग्निमित्यद्भिरग्निमवसिच्य। २३। पुत्रं[17] पौत्रमभितर्पयन्तीरि-

---

[1] K स्वधावदक्षय्यमस्त्वक्षय्यमस्त्विति. — [2] Bü त्रिष्प्र॰. — [3] Ch ॰ञ्जन. —
[4] K Ch P Bi Ku ॰स्याध्वं; Bü ॰स्यांध्व; E ॰स्याङ्ध्व. — [5] MSS. वध्वं. —
[6] So emended in accordance with Āçv. Çr. ii. 7. 6; MSS. वोचो. —
[7] Bü यूयुवतेति; P E योयुर्वात. — [8] Cf. VS. ii. 32[b]; Kāty. Çr. iv.
1. 16; Āçv. Çr. ii. 7. 6; Çāṅkh. Çr. iv. 5. 2; Donner, Piṇḍapitṛ-
yajña, p. 26. — [9] xviii. 3. 18. — [10] xviii. 4. 57; 3. 72. — [11] Cf. TS.
i. 8. 5. 1; VS. ii. 31[a]; Māitr. S. i. 10. 3, 19; Kāty. Çr. iv. 1. 13; Āçv. Çr. ii.
7. 1; Lāṭy. Çr. ii. 10. 4; Çāṅkh. Çr. iv. 4. 11; viii. 2. 13; Gobh. iv.
3. 11. — [12] Bü E Ch (prim. man.) here insert मादयध्वं. — [13] K Bü
॰वृषाद्दपतेति. — [14] Cf. TS. i. 8. 5. 2; VS. ii. 31[b]; Māitr. S. i. 10. 3,
19; Kāṭh. S. ix. 6; Kap. S. viii. 9; Kāty. Çr. iv. 1. 14; Āçv. Gr. ii.
7. 2; Lāṭy. Çr. ii. 10. 5; Çāṅkh. Çr. iv. 4. 14; Gobh. iv. 3. 12. — [15] K Bü
॰वृषाद्दपतेति. — [16] xviii. 4. 40. — [17] xviii. 4. 39. —

त्याचामत मम प्रततामहास्ततामहास्तताः सपत्नीकास्तृप्यन्त्वाचामन्त्विति[1] प्रसव्यं परिषिच्य । २४ । वीरान्मे प्रततामहा दत्त वीरान्मे ततामहा दत्त वीरान्मे पितरो दत्त पितॄन्वीरान्याचति[2] । २५ । नमो वः पितर[3] इत्युपतिष्ठते । २६ । अक्षन्नित्युत्तरसिचमवधूय[4] । २७ । परा यातेति[5] परायापर्यात । २८ । अतः[6] पित्र्युपवीती[7] यज्ञोपवीती यन्न इदं पितृभिः सह मनो ऽभूत्तदुपाह्वयामीति मन उपाह्वयति[8] । २९ । ॥ ९ ॥ ॥ ८८ ॥

मनो न्वा ह्वामहे[9] नाराशंसेन स्तोमेन ।
पितृणां च मन्मभिः[10] ॥
आ न एतु मनः पुनः क्रत्वे दक्षाय जीवसे ।
ज्योक्च सूर्यं[11] दृशे ॥
पुनर्नः पितरो मनो ददातु दैव्यः[12] जनः ।
जीवं व्रातं[13] सचेमहि ॥
वयं सोम व्रते तव मनस्तनूषु[14] विभ्रतः ।
प्रजावन्तः सचेमहि ॥

---

[1] Cf. Āçv. Çr. ii. 6. 14. — [2] Ku °रान्वाचयति; Ch °रान्वाचति; Bi °रान्याचते. — [3] xviii. 4. 81, etc. — [4] xviii. 4. 61. — [5] xviii. 4. 63. — [6] So emended; MSS. (परायापयत्य)तः; cf. Kāuç. 87. 30; also 81. 44; 85. 26; 86. 17. — [7] Ku पित्त्रुपवीती; Bü पित्र्युपवीति. — [8] So we emend the passage beginning with भूत्त°; K P Bi भूत्तमुपाह्वयामीति मन उपाह्वयति; Ch Ku भूरिति तदुपाह्वयामि मन उपाह्वयति; E भूरिति तदुपामि (!) मनु उपाह्वयति; Bü भूरिति मन उपाह्वयति; cf. Vait. Sū. 38. 4. — [9] K Bü P °महि. — [10] Ch E Bü P मन्वभिः. — [11] K P Bi Bü सूर्याय. — [12] K दैव्यं. — [13] Bü जातं. — [14] Ch Bü तनुषु. —.

ये सजाताः सुमनसो[1] जीवा जीवेषु मामकाः[2]।
तेषां श्रीर्मयि कल्पतामस्मिन्गोष्ठे शतं समा इति[3]।१।
यच्चरुस्थाल्यामोदनावशिष्टं भवति तस्योष्मभक्षं[4] भक्षयित्वा ब्राह्मणाय दद्यात्।२। यदि ब्राह्मणो न लभ्येताप्स्वभ्यवहरेत्[5]।३। निज्ञाय दासायेत्येके[6]।४। मध्यमपिण्डं[7] पत्न्यै पुत्रकामायै प्रयच्छति।५।

आ धत्त पितरो गर्भं कुमारं पुष्करस्रजम्[8]।
यथेह पुरुषो ऽसत्[9] ॥
आ त्वारुक्षद्वृषभः[10] पृश्निरग्रियो[11] मेधाविनं[12] पितरो
आ त्वायं पुरुषो गमेत्पुरुषः पुरुषादधि। [गर्भमा दधुः।
स ते श्रैष्ठ्याय जायतां स सोमे साम गायत्विति।६।

यद्यन्या[13] द्वितीया भवत्यपरं[14] तस्यै।७। प्राग्रतमं श्रोत्रियाय।८। अथ यस्य भार्या दासी वा प्रद्राविणी भवति येऽमी[15] तण्डुलाः प्रसव्यं परिकीर्णा भवन्ति तांस्तस्यै[16] प्रयच्छति।९।

---

[1] K समनसो; cf. VS. and Çāñkh. Gr. (see note 3). — [2] E कामकाः. — [3] Cf. RV. x. 57. 3-6; VS. iii. 53-56; xix. 46; TS. i. 8. 5. 2; Tāit. Br. ii. 6. 3. 5; Māitr. i. 10. 3; Kāṭh. ix. 6; Kap. S. viii. 9; Vāit. Sū. 20. 9; Lāṭy. Çr. v. 2. 11; iii. 2. 10; Āçv. Gr. ii. 7. 8; Çāñkh. Gr. v. 9. 4. — [4] Ch तस्योष्मं. — [5] So emended; [6] Bū Ku ॰प्सु अभ्यवहरे॰; the remaining MSS. ॰प्सुभ्यवहरे॰. — दासायेभ्येत्येके; Ch दासात्वेत्येके. — [7] Bi मध्यमं. — [8] K पुष्करं॰. — [9] Cf. VS. ii. 33; Kāty. Çr. iv. 1. 32; Çāñkh. Çr. iv. 5. 8; Āçv. Çr. ii. 7. 13; Gobh. iv. 3. 27. — [10] Ch E ॰वृचत्. — [11] K Ku Bū ॰पियो. — [12] Ch मेधाविनो. — [13] K यद्यद्विया. — [14] K Bū भवंत्य॰. — [15] Bū Ch Ku E मी; the rest वै. — [16] Ch तां तस्यै; Bū तास्तस्यै; Bi तंस्तस्यै. —

अर्वाच्युपसंक्रमे[1] मा पराच्युप वस्तया[3]।
अन्नं प्राणस्य बन्धनं तेन बध्नामि त्वा मयीति। १०।

पर्युक्षणीं समिधश्चादाय मा प्र गामेत्याव्रज्योर्जं बिभ्रति[3] गृहानुपतिष्ठते। ११।

रमध्वं मा बिभीतनास्मिन्गोष्ठे करीषिणः।
ऊर्जं दुहानाः[4] शुचयः शुचिव्रता[5] गृहा जीवन्त उप वः सदेम[6,7] ॥
ऊर्जं मे देवा अददुरूर्जं मनुष्या उत।
ऊर्जं पितृभ्य आहार्षमूर्जस्वन्तो गृहा मम ॥
पयो मे देवा अददुः पयो मनुष्या उत।
पयः पितृभ्य आहार्षं पयस्वन्तो गृहा मम॥
वीर्यं मे देवा अददुर्वीर्यं मनुष्या उत।
वीर्यं पितृभ्य आहार्षं वीरवन्तो गृहा ममेति।१२।

अन्तरुपातीत्य समिधो ऽभ्यादधाति।
अयं नो अग्निरध्यक्षो ऽयं नो[8] वसुवित्तमः।
अस्योपसद्ये मा रिषामायं[9] रक्षतु नः[10] प्रजाम्[11] ॥
अस्मिन्सहस्रं पुष्यास्मैधमानाः[12] स्वे गृहे।
इमं समिन्धिषीमह्यायुष्मन्तः[13] सुवर्चसः[14] ॥

---

[1] Ku Ch E Bü °क्राम (= क्रमे?). — [2] Bü वत्तया. — [3] xiii. 1. 59; vii. 60. 1. — [4] P दुहाना. — [5] Bi °व्रती. — [6] E सद्देम. — [7] Cf. VS iii. 41; Çāñkh. Çr. ii. 12. 1; Çāñkh. Gr. iii. 7. 2; Lāṭy. Çr. iii. 3. 1; Āçv. Çr. ii. 5. 17. — [8] K Bi °ध्यचयन्नो; P °ध्यचयंतो; E °ध्यचायन्नो. — [9] K °यां. — [10] Ch सचत नः; E रचतनुः; B रच पुनः. — [11] Cf. Çāñkh. Gr. iii. 7. 3. — [12] So emended; K Ku Bü Ch E पुष्यास्मैधमाना; P तुष्या°; Bi पुष्याम सधमाना. — [13] Ch P समिधि°. — [14] Cf. Çat. Br. xiv. 9. 4. 23. —

त्वमग्न ईडित आ त्वाग्न इधीमहीति[1] । १३। अभूद्दूत[2] इत्यग्निं प्रत्यानयति । १४ । यदि सर्वः[3] प्रणीतः[4] स्याद्दक्षिणाग्नौ त्वेतदाहिताग्नेः[5] । १५ । गृह्येष्वनाहिताग्नेः[6] । १६ ।

इदं चिन्मे कृतमस्तीदं[7] चिच्छक्नवानि[8] ।
पितरश्चिन्मा वेदन्निति । १७ ।

यो ह यजते तं देवा विदुर्यो ददाति तं मनुष्या यः श्राद्धानि कुरुते तं पितरस्तं पितरः । १८ । ॥ १० ॥ ॥ ८९ ॥

॥ इत्यथर्ववेदे कौशिकसूत्र एकादशो ऽध्यायः समाप्तः ॥

---

[1] xviii. 3. 42; 4. 88. — [2] xviii. 4. 65. — [3] Ch Ku सर्व. — [4] K Ch E P Bi प्रणीत. — [5] K त्वेतद°. — [6] K P गृह्यष्य°; Bü गृह्येष्या°; Bi गृह्येष्य°. — [7] So E; the rest कृतमसीदं. — [8] K P चिच्छक्नुवानिति; Bi Bü Ku Ch चिच्छक्नुदानि. —

॥ ओं ॥

मधुपर्कमाहारयिष्यन्दर्भानाहारयति[1] ।१। अथ विष्टरान्कारयति ।२। स खल्वेकशाखमेव प्रथमं पाद्यं द्विशाखमासनं त्रिशाखं मधुपर्काय।३। स यावतो मन्येत तावत उपादाय विविच्य[2] संपर्याप्य मूलानि च प्रान्तानि च यथाविस्तीर्ण इव स्यादित्युपोत्कृष्य[3] मध्यदेशे ऽभिसंनह्यति[4] ।४। ऋतेन त्वा सत्येन त्वा तपसा त्वा कर्मणा त्वेति संनह्यति[5] ।५। अथ ह सृजत्यतिसृष्टो द्वेष्टा यो[6] ऽस्मान्द्वेष्टि यं च वयं द्विष्मः[7] ।६। अस्य च दातुरिति दातारमी-

---

[1] Daç. Kar. and Ath. Paddh. place the description of the अर्घ ceremony into the middle of the विवाह (Kāuç. 76. 9); cf. Jolly, Das Dharmasūtra des Viṣṇu und das Kāṭhakagṛhya. Both paddhatis introduce it with with the words अत्र स्थाने मधुपर्क उच्यते. Then Daç. Kar. आचार्यो गृह्यगतं कर्म करोति। पुनः आचार्य(!) वेदिकामध्ये स्वस्तिवाचनं करोति (cf. Kāuç. 137. 4, note); Ath. Paddh. आचार्यो गृहागते इदं कर्म कुर्वीत । वर आगत्य । ब्राह्मणान् स्वस्ति वाचयित्वा । वराय मधुपर्कं ददाति । मधुपर्कमाहारयिष्यन् । दर्भानाहारयति । पुनर्दाता वदति। आचार्यो वदति. — [2] Bü उपादायाधिविविभ्य(!) — [3] Ch स्यादपोत्कृष्य. — [4] K P Bi पिसंनह्यति. — [5] Ath. Paddh. ऋतेन त्वा etc.। इति मध्यादभिसंनह्यति। मध्ये ग्रंथीन्करोति; Daç. Kar. विष्टरत्रयं कृत्वा। साधु भवानास्तामर्चयिष्यामो भवन्तमिति दाता वदति। विष्टरा भोः प्रतिगृह्यतां(!)। प्रतिगृह्णामि। ऋतेन त्वा etc. इति मध्ये देशे ऽभिसंनह्यति. — [6] Bi द्वेष्यां; cf. sū. 15. — [7] Ath. Paddh. अतिसृष्टो द्वेष्टेति मंत्रेण विष्टरान्करोति; Daç. Kar. वरो वदति । अतिसृष्टो etc. —

ष्ठाते। ७। अथोदकमाहारयति पाद्यं भो[1] इति[2]। ८। हिरण्यवर्णाभिः प्रतिमन्त्र्य[3] दक्षिणं पादं प्रथमं प्रकर्षति। मयि ब्रह्म च तपश्च धारयाणीति। ९। दक्षिणे प्रक्षालिते[4] सव्यं प्रकर्षति। मयि क्षत्रं च विशश्च धारयाणीति। १०। प्रक्षालितावनुमन्त्रयते।

इमौ पादाववनिक्तौ ब्राह्मणं यशसावताम्।
आपः पादावनेजनीर्द्विषन्तं[5, 6] निर्दहन्तु मे[7, 8] ॥ ११।

अस्य च दातुरिति दातारमीक्षते। १२। अथासनमाहारयति। सविष्टरमासनं भो[9] इति[10]। १३। तस्मिन्प्रत्यङ्मुख उपविशति। १४। विमृग्वरीं पृथिवीमित्येतया[11] विष्टरे पादौ प्रतिष्ठाप्याधिष्ठितो द्वेष्टा यो[12] ऽस्मान्द्वेष्टि यं च वयं द्विष्मः[13]। १५। अस्य च दातुरिति दातारमीक्षते। १६। अथोदकमाहारयत्यर्घ्यं भो[14] इति[15]। १७। तत्प्रतिमन्त्रयते। अन्नानां मुखमसि मुखमहं श्रेष्ठः समानानां भूयासम्। आपो ऽमृतं स्थामृतं मा कृणुत[16] दासास्माकं[17] बहवो

---

[1] K P भो३. — [2] Daç. Kar. पाद्यं भो इति दाता वदति प्रतिगृह्यतां प्रतिगृह्लामि वरो वदति. — [3] Ath. Paddh. and Daç. Kar. हिरण्यवर्णा इत्यपसूक्तेन (i. 33) उदकं वरस्य प्रति अभिमंत्रयते. — [4] Ath. Paddh. वरस्य पादौ यजमानः (Cod. ०नं) प्रक्षालयति. — [5] Bü Ch ०नेजनीर्द्वि०. — [6] Daç. Kar. द्विषितं. — [7] Daç. Kar. निर्हतं तु मे. — [8] Cf. Ait. Br. 8. 27. — [9] K P भो३. — [10] Ath. Paddh. दाता वदति. — [11] xii. 1. 29. — [12] Bi द्वेष्म्यां; cf. sū. 6. — [13] Ath. Paddh. विमृग्वरीमिति द्विशाखं विष्टरमासनं निदधाति। एकशाखं पादौ निदधाति। अधिष्ठितो etc. — [14] K P भो३. — [15] Ath. Paddh. दाता प्रैषं ददाति. — [16] KChEPKu and Daç. Kar. कृणुध्व. — [17] So (with double sandhi) all MSS. and Daç. Kar.; cf. the introduction. —

भवन्त्वश्वावद्गोमन्मय्यस्तु[1] पुष्टमों[2] भूर्भुवः स्वर्जनदोमिति[3,4] । १८ । तूष्णीमध्यात्मं[5] निनयति[6] । १९ । तेजो ऽस्यमृतमसीति ललाटमालभते[7] । २० । अथोदकमाहारयत्याचमनीयं भो[8] इति[9] ।२१। जीवाभिराचम्य[10] ।२२। अथास्मै मधुपर्कं वेदयन्ते ह्यनुचरो मधुपर्को भो[11] इति[12] ।२३। द्वाभ्यां शाखाभ्यामधस्तादेकयोपरिष्टात्सापिधानम्[13] । २४ । मधु वाता ऋतायत इत्येताभिरेवाभिमन्त्रणम्[14] । २५ । तथा प्रतिमन्त्रणम् । २६ । ॥ १ ॥ ॥ ९० ॥

मधु वाता ऋतायते मधु क्षरन्ति सिन्धवः ।
माध्वीर्गावो भवन्तु नः[15] ॥
मधु नक्तमुतोषसो मधुमत्पार्थिवं रजः ।
माध्वीर्नः सन्त्वोषधीः ॥

---

[1] K Ku Bi भवन्त्व°. — [2] So emended; MSS. पुष्टौं. — [3] P °दोउमिति. — [4] Ath. Paddh. दाता अर्घ्यमभिमंत्रयति वरस्य प्रति. — [5] Ku Bū P °ध्यात्मन्नि°; E °ध्यात्मंन्नि°; Ku ध्यात्मं. — [6] Ath. Paddh. वरस्यांजलिं दाता तूष्णीं निनयति (!). — [7] Daç. Kar. मुखं विमार्ष्टि. — [8] K P भोउ. — [9] Ath. Paddh. दाता वदति त्रिषं कर्तारं (Cod. कर्ता) प्रति. — [10] Ath. Paddh. and Daç. Kar. जीवा स्थेति सूक्तेन (xix. 69. 1 fg.: cf. Dārila to Kāuç. 3. 4; Vāit. Sū. 1. 19) त्रिराचमनं करोति वरः. — [11] K P भोउ. — [12] Ath. Paddh. दाता वदति. — [13] Ath. Paddh. and Daç. Kar. त्रिशाखं मधुपर्काय (cf. sū. 3) द्वाभ्यां etc. as in Kāuç. — [14] Ath. Paddh. मधु etc. इति त्रिभिरेताभिरेव वराभिमंत्रणं. Cf. RV. i. 90. 6-8; Māitr. S. ii. 7. 16 (Vol. ii. p. 99); VS. xiii. 27; Çat. Br. xiv. 9. 3. 11-13; Kāuç. 118. 1. These mantras occur also in the Kashmir-çākhā (cf. Roth, Der Atharvaveda in Kaschmir, p. 23). The verses are given in full at the beginning of the next kaṇḍikā. — [15] E interchanges this pāda with the third pāda of the next verse like RV.; VS. and Māitr. S. arrange the pādas still differently. —

मधुमान्नो वनस्पतिर्मधुमाँ अस्तु सूर्यः ।
मधु द्यौरस्तु नः पिता ॥ १ ।

तत्सूर्यस्य त्वा चक्षुषा प्रतीक्ष[1] इति[2] प्रतीक्षते[3] । २ । अयुतो ऽहं देवस्य त्वा सवितुरिति[4] प्रतिगृह्य पुरोमुखं प्राग्दण्डं निदधाति । ३ । पृथिव्यास्त्वा नाभौ सादयाम्यदित्या उपस्थ इति[5] भूमौ प्रतिष्ठाप्य । ४ । द्वाभ्यामङ्गुलिभ्यां प्रदक्षिणमाचाल्यानामिकयाङ्गुल्याङ्गुष्ठेन च संगृह्य प्राश्नाति[6] । ५ । ओं भूस्तत्सवितुर्वरेण्यं[7] भूः स्वाहेति प्रथमम् । ६ । भर्गो देवस्य धीमहि[8] भुवः स्वाहेति द्वितीयम् । ७ । धियो यो नः प्रचोदयात्स्वः[9] स्वाहेति तृतीयम् । ८ । वयं देवस्य धीमहि जनत्स्वाहेति चतुर्थम् । ९ । तुरं देवस्य भोजनं वृधत्स्वाहेति पञ्चमम् । १० । करत्स्वाहेति षष्ठम् । ११ । रुहत्स्वाहेति सप्तमम् । १२ । महत्स्वाहेत्यष्टमम् । १३ । तत्स्वाहेति नवमम् । १४ । शं स्वाहेति दशमम् । १५ । ओमित्येकादशम् । १६ । तूष्णीं द्वादशम् । १७ । तस्य भूयोमाचामिव भुक्त्वा ब्रा-

---

[1] K and Daç. Kar. प्रतीचत· — [2] Cf. VS. (Kāṇvaçākhā ii, p. 58 of Weber's edition): Kāty. Çr. ii. 2. 15; Lāṭy. Çr. iv. 11. 10; Vāit. Sū. 3. 8; Gop. B[r. i]i. 1. 2. — [3] Ath. Paddh. मधुपर्कमीक्षते· — [4] xix. 51. 1, 2; Ath. Paddh. अयुतो ऽहमिति सूक्तेन देवस्य त्वेति चक्. — [5] Cf. VS. (Kāṇvaçākhā ii., p. 58 of Weber's edition); Kāty. Çr. ii. 2. 17; Çāṅkh. Çr. iv. 7. 6; Lāṭy. Çr. iv. 11. 12; Gop. Br. ii. 1. 2 Vāit. Sū. 3. 10; cf. Ind. Stud. ii. 307. — [6] Ath. Paddh. भोजनवत — [7] RV. iii. 62. 10[a], and in other Saṁhitās. — [8] RV. iii. 62. 10[b], etc. — [9] RV. iii. 62. 10[c], etc. —

ह्मणाय श्रोत्रियाय प्रयच्छेत् । १८ । श्रोत्रियालाभे[1] वृषलाय प्रयच्छेत् । १९ । अथाप्ययं[2] निगमो भवति ।

सोममेतत्पिबत[3] यत्किं चाश्नीत ब्राह्मणाः ।
माब्राह्मणायोच्छिष्टं दात मा सोमं पात्वसोमप इति[4,5]
। २० । ॥ २ ॥ ॥ ९१ ॥

दधि च मधु च ब्राह्मो[6] मधुपर्कः । १ । पायस ऐन्द्रो मधुपर्कः । २ । मधु चाज्यं च सौम्यो मधुपर्कः । ३ । मन्थश्चाज्यं च पौष्णो[7] मधुपर्कः । ४ । क्षीरं चाज्यं च सारस्वतो मधुपर्कः । ५ । सुरा चाज्यं च मौसलो मधुपर्कः । ६ । स खल्वेष[8] द्वये भवति सौत्रामण्यां[9] च राजसूये च । ७ । उदकं चाज्यं च वारुणो मधुपर्कः । ८ । तैलं चाज्यं च श्रावणो मधुपर्कः । ९ । तैलश्च पिण्डश्च पारिव्राजको[10] मधुपर्कः । १० । इति[11] खल्वेष नवविधो मधुपर्को भवति । ११ । अथास्मै गां वेदयन्ते गौर्भो[12] इति[13] । १२ । ताम्प्रतिमन्त्रयते[14] ।

भूतमसि भवदस्यन्नं प्राणो बहुर्भव ।
ज्येष्ठं यन्नाम नामत

---

1 E श्रोत्रियस्यालाभे. —
2 Bū अथाप्यनिमिगमो; K P अथाप्रियं निगमो; Ku अथाप्यम्नि निगमो; Ch अथाप्यग्निगमो; Bi अथाप्ययं चिगमो. —
3 K P Ch पिबति; Bi °ते. —
4 K P Bi °सोमपमिति; Ch °सोमभिति. —
5 Cf. Lāṭy. Çr. ii. 12. 17; Ind. Stud. x. 61-63. —
6 K E Bi and Ath. Paddh. ब्राह्म्यो; Bū Ku Ch P as above. —
7 E पौष्णो. —
8 So E; Bū खल्वेख; K Ku Ch P Bi खल्वेक. —
9 P सौत्रामण्यां. —
10 E P परि°. —
11 Here P inserts स. —
12 K P भोउ. —
13 Daç. Kar. दाता ब्रूयात्. —
14 Daç. Kar. आचार्यो गां (Cod. गौः) प्रतिमन्त्रयेत्; Ath. Paddh. मंचं (Cod. मंचे) वरः. —

ओं भूर्भुवः स्वर्जनदोमिति[1] । १३ । अतिसृजति[2] ।

मातादित्यानां दुहिता वसूनां स्वसा रुद्राणाममृतस्य नाभिः ।

प्र णो[3] वोचं चिकितुषे जनाय मा गामनागामदितिं वधिष्ट[4] ॥

ओं[5] तृणानि गौरश्नित्याह[6] । १४ । सूयवसादिति[7] प्रतिष्ठमानामनुमन्त्रयते । १५ । नालोहितो मधुपर्को भवति[8] । १६ । नानुज्ञानमधीमह[9] इति कुरुतेत्येव[10] ब्रूयात् । १७ । स्वधिते मैनं हिंसीरिति शस्त्रं प्रयच्छति[11] । १८ । पाप्मानं मे ऽप जहीति कर्तारमनुमन्त्रयते । १९ । आग्नेयीं वपां कुर्युः । २० । अपि वा[12] ब्राह्मण एव प्राश्नीयात्तद्दैवतं[13] हि तद्भवति । २१ । अथास्मै स्नानमनुलेपनं माल्याभ्यञ्जनमिति[14] । २२ । यदन्योपसमाहार्यं भवति तदुपसमाहृत्य । २३ । अघोपासकाः प्राप्योपासकाः स्मो[15] भो[16] इति वेदयन्ते[17] । २४ ।

---

[1] KP °दो३मिति. — [2] Ath. Paddh. गां विसर्जयति आचार्यो ब्रूते. — [3] So all MSS. (except Ku) and Daç. Kar.; Ku णु. — [4] RV. viii. 101. 15; Āçv. Gṛ. i. 24. 32; Pār. Gṛ. i. 3. 27; Gobh. Gṛ. iv. 10. 9; Lāṭy. Çr. i. 2. 13. — [5] K Bū Ch वधिष्टों; E P B Ku वधिष्ठों; Daç. Kar. वसिष्ठः (!). — [6] Ath. Paddh. गौस्तृणानि (!) ददाति. — [7] vii. 73. 11. — [8] This word is wanting in K Bū Bi P. — [9] Ch नानुज्ञाम°; E नाननुज्ञातम°. — [10] Cf. Çāṅkh. Gṛ. ii. 15. 3; Āçv. Gṛ. i. 24. 31; Pār. Gṛ. i. 3. 30; Gobh. Gṛ. iv. 10. 22; Lāṭy. Çr. i. 2. 12. — [11] Cf. Kāuç. 44. 30. — [12] E °पीव. — [13] K E °द्दैवतं. — [14] E Ku माल्या°; Ch माल्याभ्या°. — [15] P Bi Bū स्म. — [16] K भो३ — [17] Ath. Paddh. वस्त्रालंकारादि सर्वं समाहृत्य ददाति । प्राप्योपासकाः स्मो भो इति दाता वदति. —

तान्प्रतिमन्त्रयते[1]। भूयांसो[2] भूयास्म ये च नो भूयसः[3]काष्ठापि[4] च नो ऽन्ये[5] भूयांसो जायन्ताम्।२५। अस्य च दातुरिति दातारमीक्षते[6]। २६। अथान्नाहाराः प्राप्यान्नाहाराः स्मो[7] भो[8] इति वेदयन्ते। २७। तान्प्रतिमन्त्रयते[9]। अन्नादा भूयास्म ये च नो ऽन्नादान्काष्ठापि[10,11] च नो ऽन्ये[12] ऽन्नादा भूयांसो जायन्ताम्।२८। अस्य च दातुरिति दातारमीक्षते।२९। आहृते[13] ऽन्ने जुहोति यत्काम कामयमाना इत्येतया[14]। ३०।

यत्काम कामयमाना इदं कृण्मसि ते हविः।

तन्नः सर्वं समृध्यतामथैतस्य हविषो वीहि स्वाहेति।३१।

एष आचार्यकल्प एष ऋत्विक्कल्प एष संयुक्तकल्प एष विवाहकल्प एषो ऽतिथिकल्प एषो ऽतिथिकल्पः।३२।

॥ ३ ॥ ॥ ९२ ॥

॥ इत्यथर्ववेदे कौशिकसूत्रे द्वादशो ऽध्यायः समाप्तः ॥

---

[1] Ath. Paddh. and Daç. Kar. आचार्यः. — [2] So emended; MSS. of the text and Paddhatis भूयसो; cf. sū. 28. — [3] Daç. Kar. has a colon here. — [4] E Bi काष्ठापि; Daç. Kar. काष्टापि. Is the passage to be read: ये च नो भूयांसः काष्ठापि etc.? — [5] K Bi न्ने — [6] Daç. Kar. आचार्यः. — [7] K Bü P and Ath. Paddh. स्म. — [8] K P भोऽ. — [9] K तान्मन्त्रयते; Ath. Paddh. आचार्यो मन्त्रयते; Daç. Kar. दाता वदति. — [10] So emended; MSS. of the text and Daç. Kar. न्नादा का°; cf. the accusative भूमसो in sū. 25. — [11] E काष्ठापि; Daç. Kar. काष्टापि. Is the passage to read: ये च नो ऽन्नादाः काष्ठापि etc.? — [12] K न्ने. — [13] E and Daç. Kar. आहुते; B आहृते. — [14] xix. 52. 5; but note the सकलपाठ in the next sūtra; Ath. Paddh. यत्काम इत्येकया विवाहे वस्त्रार्या अन्यत्र हस्तहोमः। ...अभ्यागते आचार्यो (!) विवाहे वराय मधुपर्को देयः। अन्येभ्यश्चतुर्वर्णिकेभ्यो द्रव्याढ्येभ्यश्चतुराश्रमोणिभ्यश्च गृहागते मधुपर्कः देयः। मधुपर्कः समाप्तः. —

॥ ओं ॥

अथाद्भुतानि । १ । वर्षे । २ । यक्षेषु । ३ । गोमायुवदने । ४ । कुले कलहिनि । ५ । भूमिचले । ६ । आदित्योपप्लवे । ७ । चन्द्रमसश्च[1] । ८ । औषस्यामनुद्यत्याम्[2] । ९ । समायां दारुणायाम् । १० । उपतारकशङ्कायाम् । ११ । ब्राह्मणेष्वायुधिषु । १२ । दैवतेषु[3] नृत्यत्सु च्योतत्सु हसत्सु गायत्सु । १३ । लाङ्गलयोः संसर्गे । १४ । रज्वोस्तन्त्वोश्च । १५ । अग्निसंसर्गे । १६ । यमवत्सायां गवि । १७ । वडवागर्दभ्योर्मानुष्यां च । १८ । यत्र धेनवो लोहितं दुहते । १९ । अनडुहि[4] धेनुं धयति । २० । धेनौ[5] धेनुं धयन्त्याम्[6] । २१ । आकाशफेने । २२ । पिपीलिकानाचारे । २३ । नीलमक्षानाचारे । २४ । मधुमक्षानाचारे । २५ । अनाज्ञाते[7] । २६ । अवदीर्णे[8] । २७ । अनुदक उदकोन्मीले । २८ । तिलेषु समतैलेषु[9] । २९ । हविः-

---

[1] So (चन्द्रमसश्चौप°) K Ku Bü Bi P E; Ch चन्द्रमसाच्चोप°. — [2] So emended; K P Ch (prim. man.) °नूदंत्यां; E Bi °नूर्दित्यां; Ku Ch (sec. man.) °नुर्दित्यां; Bü °नूदत्यां. — [3] So emended; MSS. दैवतेषु; cf. Kāuç. 6.34; 105.1. — [4] E अनडुहे; Ku Bi अनड्डुहि. — [5] So emended; MSS. धेनुर्धे°. — [6] So emended; MSS. धयत्यां; Ch on the margin धेनुर्धेनुं धयति. — [7] K (°चारे)नान्याते. — [8] E विदीर्णे. — [9] Ch (prim. man.) °न्मोलेषु सतिलेषु. —

ष्वभिमृष्टेषु । ३० । प्रसव्येष्वावर्तेषु । ३१ । यूपे[1] विरोहति । ३२ । उल्कायाम् । ३३ । धूमकेतौ[2] सप्तर्षीनुपधूपयति । ३४ । नक्षत्रेषु पतापतेषु । ३५ । मांसमुखे[3] निपतति । ३६ । अनग्नावभासे[4] । ३७ । अग्नौ[5] श्वसति[6] ।३८। सर्पिषि तैले मधुनि च विष्यन्दे[7] । ३९ । ग्राम्ये ऽग्नौ[8] शालां[9] दहति । ४० । आगन्तौ च । ४१ । वंशे[10] स्फोटति ।४२। कुम्भोदधाने[11] विकसत्युखायां सक्तुधान्यां च ।४३। ॥ १ ॥ ॥ ९३ ॥

अथ यत्रैतानि वर्षाणि वर्षन्ति घृतं[12] मांसं मधु च यद्धिरण्यं[13] यानि चाप्यन्यानि[14] घोराणि वर्षाणि वर्षन्ति[15] तत्पराभवति कुलं वा ग्रामो वा जनपदो वा । १ । तत्र राजा भूमिपतिर्विद्वांसं ब्रह्माणमिच्छेत्[16] । २ । एष ह वै विद्वान्यद्भृग्वङ्गिरोवित् । ३ । एते ह वा अस्य सर्वस्य शमयितारः[17] पालयितारो यद्भृग्वङ्गिरसः[18] । ४ । स आ-

---

[1] So emended; MSS. यूपो. — [2] K P E Bi धूमकेतुः. — [3] So emended; MSS. °मुखो. — [4] So emended; MSS. °नग्नावभासे. Cf. Kāuç. 130. 1. — [5] Ch E । अग्नी. — [6] K श्वसति; E चसति. — [7] So Ku P; Bi विष्यदे; Bü Ch E विष्यन्दे; K विस्यंदे; cf. Kāuç. 132. 1. — [8] So emended; K Ku P Bi Bü E Ch (sec. man) ग्राम्यो ऽग्निः; Ch (prim. man.) ग्राम्ये ऽग्निः. — [9] Ch शाला. — [10] K P वंश. — [11] Thus with double sandhi (for कुम्भ उदधाने) all MSS.: see the introduction. — [12] K पक्कं; cf. the first stanza of the mantra, sū. 14. — [13] Ch (prim. man.) यद्दिरिण्यं; Ch (sec. man.) यद्धिरिण्यं; cf. the first stanza of the mantra, sū. 14; P Bü have a colon here, as in sū. 14. — [14] K यान्यन्यानि. — [15] The passage beginning with the word घृतं and ending here is wanting in Bi; the first part of it is metrical as in the mantra, sū. 14. — [16] Ch (prim. man.) ब्रह्मणमि°. — [17] Bü समयितारः. — [18] The passage beginning with एते and ending here is wanting in

होपकल्पयध्वमिति । ५ । तदुपकल्पयन्ते कंसमहते वसने शुद्धमाज्यं शान्ता ओषधीर्नवमुदकुम्भम् । ६ । चीणि[1] पर्वाणि कर्मणः[2] पौर्णमास्यमावास्ये पुण्यं नक्षत्रम् । ७ । अपि चेदेव यदा कदा चिदार्ताय कुर्यात् । ८ । स्नातो ऽहतवसनः सुरभिर्व्रतवान्कर्मण्य[3] उपवसत्येकरात्रं त्रिरात्रं षड्रात्रं द्वादशरात्रं वा । ९ । द्वादश्याः[4] प्रातर्यत्रैवादः पतितं भवति तत उत्तरमग्निमुपसमाधाय । १० । परिसमुह्य पर्युक्ष्य परिस्तीर्य बर्हिरुदपात्रमुपसाद्य परिचरणेनाज्यं परिचर्य । ११ । नित्यान्पुरस्ताद्धोमान्हुत्वाज्यभागौ च । १२ । अथ जुहोति । १३ ।

घृतस्य धारा इह[5] या वर्षन्ति पक्वं मांसं मधु च यद्धिरण्यम्[6] ।
द्विषन्तमेता अनु यन्तु वृष्टयो ऽपां वृष्टयो बहुलाः[7] सन्तु मह्यम् ॥
लोहितवर्षं मधुपांसुवर्षं यद्वा वर्षं घोरमनिष्टमन्यत् ।
द्विषन्तमेते अनु यन्तु सर्वे पराञ्चो यन्तु निवर्तमानाः ॥

अग्नये स्वाहेति हुत्वा । १४ । दिव्यो गन्धर्व इति[8] मातृनाम-

---

KP: it is probably a gloss. The same passage is interpolated in Bi before उपवसति below, sū. 9. —

[1] K omits the passage beginning here, and continuing through the next three sūtras, but reads instead: बाह्यतः शान्तवृक्षस्येध्मं प्राध्यमुपसमाधाय परिस्तीर्य etc., as in sū. 11. — [2] Bū मर्मणः. — [3] P कमणावुप°; E कर्मण्युप°. — [4] Bū द्वादशाः. — [5] Bū अभि. — [6] Ch (prim. man) यद्विरिण्यम्; Ch (sec. man.) यद्धिरिण्यम्; cf. sū. 1. — [7] So all MSS.; Weber, Omina und Portenta, p. 349, reads बहुलं. — [8] ii. 2. 1. For the मातृनामानि (सूक्तानि) and the मातृगण of the gaṇamālā, Ath. Pariç. 34. 4, see Kāuç. 8. 24, and note. —

भिर्जुहुयात् । १५। वरमनड्वाहं ब्राह्मणः कर्त्रे दद्यात्।१६। सीरं वैश्यो ऽश्वं प्रादेशिको ग्रामवरं[1] राजा । १७ । सा तत्र प्रायश्चित्तिः । १८ । ॥ २ ॥ ॥ ९४ ॥

अथ यत्रैतानि यक्षाणि दृश्यन्ते तद्यथैतन्मर्कटः श्वापदो[2] वायसः पुरुषरूपमिति तदेवमाशङ्क्यमेव भवति।१। तत्र जुहुयात् । २ ।

यन्मर्कटः[3] श्वापदो वायसो यदीदं[4] राष्ट्रं[5] जातवेदः पुरुषरक्षसमिधिरं यत्पताति[6] । [ताति

द्विषन्तमेते अनु यन्तु सर्वे पराञ्चो यन्तु निवर्तमानाः॥

अग्नये स्वाहेति हुत्वा । ३ । दिव्यो गन्धर्व इति मातृनामभिर्जुहुयात्[7]।४। सा तत्र प्रायश्चित्तिः । ५ । ॥ ३ ॥ ॥९५॥

अथ ह गोमायू नाम मण्डूकौ यत्र वदतस्तद्यन्मन्यन्ते[8] मां प्रति वदतो मां प्रति वदत इति तदेवमाशङ्क्यमेव भवति । १ । तत्र जुहुयात् । २ ।

यद्गोमायू वदतो जातवेदो ऽन्यया[9] वाचाभि[10] जञ्जभातः[11] ।

---

[1] Bü E °चरं. — [2] E °पंदो. — [3] K अर्के. — [4] Ch (prim. man.) वदीदं; the rest, as above; Weber, ibid. p. 354, emends to यदिदं. — [5] K राष्टं. — [6] So emended; MSS. यः पताति; the pāda disturbs the metre of the stanza, which is without it good triṣṭubh. — [7] ii.2.1. For the मातृनामानि (सूक्तानि) and the मातृगण of the gaṇamālā, Ath. Pariç. 34. 4, see Kāuç. 8. 24, and note. — [8] So emended with Weber, ibid. p. 356: MSS. वदतसद्यन्मन्यन्ते. — [9] Bi व्यथा or व्यधा. — [10] Thus emended; MSS. वाचामभि. The words are to be read metrically वाचा अभि. — [11] So emended with Weber, as third person dual subjunctive of the intensive: MSS. जञ्जमानः. Cf. Kāuç. 114. 2. —

रथंतरं बृहच्च सामैतद्विषन्तमेतावभि[1] नानदैताम्[2] ॥
रथंतरेण त्वा बृहच्छमयामि बृहता[3] त्वा रथंतरं शमयामि ।
इन्द्राग्नी त्वा ब्रह्मणा वावृधानावायुष्मन्तावुत्तमं[4] त्वा कराथः ॥
इन्द्राग्निभ्यां स्वाहेति हुत्वा । ३ । दिव्यो गन्धर्व इति मातृनामभिर्जुहुयात्[5] । ४ । सा तत्र प्रायश्चित्तिः । ५ ।
॥ ४ ॥ ॥ ९६ ॥

अथ यद्येतत्कुलं कलहि भवति तन्निर्ऋतिगृहीतमित्याचक्षते । १ । तत्र जुहुयात् । २ । आरादरातिमिति[6] द्वे[7] । ३ ।
अयाश्चाग्ने ऽस्यनभिशस्तिश्च सत्यमित्त्वमया[8] असि ।
अयासा मनसा कृतो ऽयास्यं[9] हव्यमूहिषे[10] ।

---

[1] E °वमो. — [2] Thus emended with Weber, Omina und Portenta, p. 356, as subjunctive third dual middle with secondary ending of the intensive; K Bü नानुदिताम्; Ch P Bi Ku नानुदंवताम्; E नानुदंवतम्. — [3] K P Bü बृहदा; E बृहतां. — [4] E °न्ता उत्तामं. as at Kāuç. 97.6. — [5] ii. 2. 1. For the मातृनामानि (सूक्तानि) and the मातृगण of the gaṇamālā, Ath. Pariç. 34. 4, see Kāuç. 8. 24, and note. — [6] E B °मिते. — [7] viii. 2. 12, 13. — [8] Thus emended; MSS. °त्वमया. Cf. Kāuç. 5. 13. — [9] Thus emended; Ch E Bi Bū Bh याश्म॰ (so also in Kāuç. 5. 13); K याश्मा॰ (so also in Kāuç. 5. 13); P reads याश्मा॰ here, but यश्मा॰ in kaṇḍikā 5; Ku याश्मन्; Antyeṣṭi. यासा; Māitr. S. ऽयाः सन्; Çāñkh. Çr. यासं; Weber, Omina und Portenta, p. 357, conjectures ऽयास्त्वं. — [10] MSS. of the text °मूहिष (आ); Antyeṣṭi. °मूहिषः ।; Ath. Paddh. °मुहिषः ।; cf. Kāuç. 5. 13. —

अया नो धेहि[1] भेषजं[2] ॥

स्वाहेत्यग्नौ हुत्वा । ४ । तत्रैवैतान्होमाञ्जुहुयात्[3] । ५ ।

आराद॒ग्निं क्रव्यादं॑ निरूहञ्जीवातवे[4] ते परिधिं द॑धामि[5] ।

इन्द्राग्नी त्वा ब्रह्मणा[6] वावृधानावायुष्मन्तावुत्तमं[7] त्वा करायः ॥

इन्द्राग्निभ्यां स्वाहेति हुत्वा । ६ । अपेत एतु निर्ऋतिरित्येतेन सूक्तेन जुहुयात् । ७ ।

अपेत एतु निर्ऋतिर्नेहास्या[8] अपि[9] किं चन ।
अपास्याः[10] सत्वनः[11] पाशान्मृत्यूनेकशतं नुदे[12] ॥
ये ते पाशा एकशतं मृत्यो मर्त्याय हन्तवे ।
तांस्ते यज्ञस्य मायया सर्वा॑ अप[13] यजामसि ॥

---

[1] Thus emended; Antyeṣṭi. अया धेहि; MSS. of the text and Ath. Paddh. आ नो धेहि; Māitr. S., Kāty. Çr. and Çāñkh. Çr. अया नो धेहि; cf. Kāuç. 5. 13. — [2] The verse occurs in Kāuç. 5. 13 and with more or less variation at Māitr. S. i. 4. 3; Kāṭh. S. v. 4; Kāty. Çr. xxv. 1. 11; and Çāñkh. Çr. iii. 19. 3. — [3] Ch E P Bi Ku होमान्; the rest होमां. — [4] K Bū P Ku निरूहं; Ch E Bi निरुहं; cf. viii. 2. 9c. — [5] Cb (prim. man.) परि द्धामि; E P B ददामि; the two pādas ending here are identical with viii. 2. 9cd. — [6] K ब्रह्मणां. — [7] E ता उत्तमं, as at Kāuç. 96. 3; Ch (prim. man.) °धानायुवाप्मंतायुत्तमं. — [8] K °स्मा; P स्मा॑३. — [9] Thus emended with Weber, Omina und Portenta, p. 358; MSS. अप. Possibly the entire pada originally stood as follows: नेहास्मा॑ आप किं चन. Cf. note 8. — [10] K अपस्यात्स°; Bū अपास्यात्स°; E आपास्याः; P अपस्या. — [11] E सत्वंनः. — [12] The pratīka of this stanza occurs at Vāit. Sū. 38. 1. — [13] Weber, ibid. reads सर्वानप —

निरितो यन्तु नैर्ऋत्या[1] मृत्यव एकशतं परः[2]।
सेधामैषां[3] यत्तमः[4] प्राणं ज्योतिश्च दध्महे[5] ॥
ये[6] ते शतं वरुण ये सहस्रं यज्ञियाः पाशा वितता महान्तः।
तेभ्यो अस्मान्वरुणः सोम इन्द्रो[7] विश्वे मुञ्चन्तु मरुतः स्वर्काः[8] ॥
ब्रह्म भ्राजदुदगादन्तरिक्षं दिवं च[9] ब्रह्मावाधूष्टामृतेन[10] मृत्युम्[11]।
ब्रह्मोपद्रष्टा सुकृतस्य साक्षाद्ब्रह्मास्मदप[12] हन्तु शमलं तमश्च[13] ॥ ८।

वरमनड्वाहमिति समानम्[14]। ९। ॥ ५॥ ॥ ९७ ॥

अथ यत्रैतद्भूमिचलो भवति तत्र जुहुयात्।१।
अच्युता[15] द्यौरच्युतमन्तरिक्षमच्युता भूमिर्दिशो अच्युता इमाः।

---

[1] K E P Bi नैर्ऋत्यां; Bü नैर्ऋता. — [2] This division is according to Ch K Bü E Ku; Weber, ibid. joins this word to the next pada; cf. note 4. — [3] Thus emended; MSS. सेधामेषां. — [4] Weber, ibid., having placed the word परः at the head of this pada, emends यत्तमः to तमः, metri causa; cf. note 2. E reads च उत्तमः; Ku यतमः. — [5] K Bi दध्महे; P दह्महे. — [6] E ऽये. — [7] Bü इन्द्रो. — [8] Cf. for this stanza Kāty. Çr. xxv. 1. 11. — [9] The words दिवं च, which disturb the metre, appear in all MSS. — [10] Thus emended; KCh ब्रह्मावाधूष्टा॰; Ku ॰धुष्टा॰; Bü ॰धोष्या॰; Bi ॰धौष्टा॰; E ॰धूष्टवा॰; P ब्रह्मावाष्टा॰. — [11] K P B सत्यं; Bü रुत्युं. — [12] K ॰स्मतप; by cancelling the syllable स्मद् and reading ब्रह्माप good triṣṭubh metre may be constructed. — [13] Ch तपश्च. — [14] Cf. Kāuç. 94. 16 fg. — [15] The pratika of this hymn seems to be employed in Kāuç. 35. 12, a fact not noted there. —

ब्रह्मचारी चरति ब्रह्मचर्यमृचं[1] गाथां ब्रह्म परं जिगांसन्[2]।
तं विप्रा अनुपरियन्ति[3] सर्वे ये अन्तरिक्षे ये च दिवि श्रितासः[4]।
तं[5] विशो अनुपर्यन्ति[6] सर्वाः कर्माणि लोके परिमोहयन्ति[7][8]।
स इमं दूतं नुदतु वंशपृष्ठात्स[9] मे गच्छतु द्विषतो निवेशमादित्याय स्वाहा॥

यो नक्षत्रैः सरथं[10] याति देवः[11] संसिद्धेन[12] रथेन सहं रूपंरूपं कृण्वानश्चित्रभानुः सुभानुः। [संविदानः।
स इमं दूतं नुदतु[13] वंशपृष्ठात्स[14] मे गच्छतु द्विषतो निवेशं चन्द्राय स्वाहा॥

ओषधयः सोमराज्ञीर्यशस्विनीः।
ता इमं[15] दूतं नुदन्तु[16] वंशपृष्ठात्स[17] मे गच्छतु

---

[1] Ku ब्रह्मचारीर्यमृचं; E ब्रह्मचर्यमृतं. — [2] Thus emended; Ch खिघांस; the rest जिघांसन्; cf. in support of the emendation Çat. Br. i. 4. 1. 21, in which Weber, ibid., p. 406, note 4, also proposes to emend जिघांसन्ति to खिगांसन्ति. — [3] So P Bi Bū: the rest ॰पर्यंति: cf. the next ardharca. — [4] So Bi P; Bū मृतासः; Ch E Ku श्रुतासः The passage is wanting in K. — [5] P Bi तां; E त. — [6] So P Bi Bū: the rest ॰पर्यंति: cf. the preceding ardharca. — [7] P ॰मोहयंती. — [8] K omits the two ardharcas ending here. — [9] So E Ku: K P Bi वंयस्पृष्ठात्स; Ch वंशस्पृष्टात्स; Bū वंशपृष्टात्स. — [10] Bū सरथे. — [11] Ch K देवान्. — [12] E ॰सिद्धिना. — [13] K नुद. — [14] So E Ku; K P Bi वंशस्पृठात्स; Ch वंशस्पृष्टात्स; Bū वंशपृष्टात्स. — [15] K ॰स्विनीः॥ ता इमं; Ch (prim. man.) ॰स्विनीस्तयिमं for which compare Kāuç. 74. 19, note; 20, note: the rest ॰स्विनीस्ता. — [16] So Bū; the rest नुदतु; cf. p. 287, note 2. — [17] So E Ku; Bū वंशपृष्टात्स; K P Bi वंशस्पृष्ठात्स; Ch वंशस्पृष्टात्स. —

द्विषतो निवेशमोषधीभ्यः सोमराज्ञीभ्यः स्वाहा ॥
ओषधयो वरुणराज्ञीर्यशस्विनीः ।
ता[1] इमं दूतं नुदन्तु[2] वंशपृष्टात्स[3] मे गछतु
द्विषतो निवेशमोषधीभ्यो वरुणराज्ञीभ्यः स्वाहा ॥
अष्टस्थूणो दशपक्षो[4] यद्दछ्जो[5] वनस्पते ।
पुत्रांश्चेव[6] पशूंश्चाभि रक्ष वनस्पते ॥
यो वनस्पतीनामुपतापो बभूव यद्वा गृहान्घोरमुता जगाम[7 8]
तन्निर्जगाम[9] हविषा घृतेन शं नो अस्तु द्विपदे शं चतुष्पदे ॥
यो वनस्पतीनामुपतापो न आगद्यद्वा यज्ञं नो ऽङ्गुतमा जगाम ।
सर्वं तदग्ने हुतमस्तु भागशः शिवान्वयमुत्तरेमाभि वाजान्[10] ॥
त्वष्ट्रे स्वाहेति हुत्वा । ९ । त्वष्टा मे दैव्यं वच[11] इत्यचोदपात्रं

---

[1] K °स्विनीः ॥ ता; the rest °स्विनीस्ता. — [2] So Ku; the rest नुदतु; cf. p. 286, note 16. — [3] So E Ku; Bū वंशपृष्टात्सः K P Bi वंशसृष्टात्स; Ch वंशस्पृष्टात्स. — [4] E °पच्यो. — [5] Thus emended; Ch यदृत्तजो; K यदित्तजो; P Bi यदिकूजो; Bū यदकूजो; Ku सदत्तजो; E गादिकूजो. Weber, Omina und Portenta, p. 409, note 6, suggests the emendation यद्दृक्कुज (vocative). — [6] Bū पुत्रांश्चेह. — [7] So K Bi Bū; P गृहां; Ch E Ku गृहं. — [8] So E; K P Bi Bū °त आजगाम; Ch °तमाजगाम; K °तं जगाम. This pāda and the following ardharca recur at Kāuç. 129. 2. — [9] K P Bi तन्निर्जगामो; Ku तं निर्जगामे; Ch तं निर्जगामो; Bū तं निर्यजामो; cf. Kāuç. 129. 2. — [10] For this line K substitutes the second line of the preceding stanza.— [11] vi. 4. 1. —

निनयति । १० । कपाले[1] ऽग्निं चादायोपसर्पति । ११ । सा तत्र प्रायश्चित्तिः । १२ । ॥ ४३ । ॥ १३५ ॥

अथ यत्रैतत्कुम्भोदधानः[2] सक्तुधानी वोखा[3] वानिङ्गिता विकसति तत्र जुहुयात् । १ ।

भूमिर्भूमिमवागान्माता[4] मातरमप्यगात् ।

ऋध्यास्म पुत्रैः[5] पशुभिर्यो नो द्वेष्टि स भिद्यतामिति । २ । सदसि सन्ने भूयादिति[6] सक्तूनावपेत् । ३ । अथ चेदोदनस्यान्नमस्यन्नं मे देह्यन्नं[7] मा मा हिंसीरिति त्रिः प्राश्य[8] । ४ । अथ यथाकामं प्राश्नीयात् । ५ । अथ चेदुदधानः[9] स्यात्समुद्रं वः प्र हिणोमीत्येताभ्यामभिमन्त्र्य[10] । ६ । अन्यं[11] कृत्वा ध्रुवाभ्यां[12] दृंहयित्वा । ७ । तत्र हिरण्यवर्णा[13] इत्युदकमासेचयेत्[14] । ८ । स खल्वेतेषु कर्मसु सर्वत्र शान्त्युदकं कृत्वा सर्वत्र चातनान्यनुयोजयेन्मातृनामानि[15. 16] च । ९ । सर्वत्र वरां धेनुं कर्त्रे दद्यात् । १० । सर्वत्र कंसवसनं[17] गौर्दक्षिणा[18]

---

[1] K कपाले. — [2] Thus with double sandhi (for कुम्भ उद्धानः) all MSS.; cf. Kāuç. 93. 43, and the introduction. — [3] Ku वोखां; Ch K E Bi वोषा. — [4] Thus emended in accordance with the corresponding passage in Kāty. Çr. xxv. 5. 29; MSS. भूमिर्भूमिमगान्माता. — [5] K Bū ऋध्यास्मत्पु°. — [6] Thus emended; Ch भूयांनिति; Ku भूयाति; the rest भूयानिति. — [7] K Bi Bū धेह्यन्नं. — [8] E प्रास्य. — [9] °धान. — [10] x. 5. 23, 24. — [11] K अह्न्यं. — [12] The ध्रुवे (sc. ऋचौ) according to Ath. Paddh. to Kāuç. 43. 11 are iii. 12. 1, 2. — [13] i. 33. 1. — [14] K P °सिंचयेत्. — [15] K चातननांन्यनु°; E चातामान्यनु°. — [16] For the चातनगण see Kāuç. 8. 25 and note; for the मातृगण 8. 24, and note. — [17] Bi °वसनां. — [18] Ku Bi गोर्द°. —

।११। ब्राह्मणान्भक्तेनोपेप्सन्ति[1] ।१२। यथोद्दिष्टं चादिष्टास्विति[2] प्रायश्चित्तिः प्रायश्चित्तिः[3] ।१३। ॥ ४४ ॥
॥ १३६ ॥

॥ इत्यथर्ववेदे कौशिकसूत्रे त्रयोदशोऽध्यायः समाप्तः ॥

---

[1] K °पेचति. — [2] So E Ku; Ch °स्वित्तिः; K °श्चित्तिः; Bi °श्चित्ति; P °चिति; Bü चारिष्टाश्चिति. — [3] Bü has this word but once (प्रायश्चित्ति!). —

॥ ओं ॥

यथावितानं यज्ञवास्त्वध्यवसेत् । १ । वेदिर्यज्ञस्याग्नेरुत्तरवेदिः[1] । २ । उभे प्रागायते[2] किंचित्प्रथीयस्यौ[3] पश्चादुद्यततरे । ३ । अपृथुसंमितां[4] वेदिं विदध्यात्[5] । ४ । षट्शमीं प्रागायतां[6] चतुःशमीं श्रोण्याम् । ५ । त्रीन्मध्ये अर्धचतुर्थानयतः । ६ । त्रयाणां पुरस्तादुत्तरवेदिं विदध्यात् । ७ । द्विःशमीं प्रागायतामृज्वीमध्यर्धशमी[7] श्रोण्याम्[8] । ८ ।

---

[1] Cf. Dārila to Kāuç. 2. 18. — [2] So emended; MSS. प्राङ्गायते. — [3] Ch पृथोयस्यौ; E पृथि°. — [4] E पृथु°; Bh Ch (prim. man.) अपृतु°; Ch (sec. man.) अप्यतु° (?); Bū अप्पृतु°; K अमृतु°. — [5] The Daç. Kar. treats the subject of this kaṇḍikā essentially in the same manner as the Kāuçika, but with a different introduction: अथाज्यतंत्रमारभ्यते । तत्र पदार्थानुक्रमो यथा । पूर्वं स्वस्तिवाचनं । त्यमू षु वाजिनं etc. (vii. 85. 1) । त्रातारमिन्द्रम् etc. (vii. 86. 1) । आ मन्द्रैरिन्द्र etc. (vii. 117. 1) मर्माणि ते वर्मणा etc. (vii. 118. 1) । अव्यचसश्च (Cod. अव्यसश्च) व्यचसश्च etc. (xix. 68. 1) । इति स्वस्तिवाचनं । (cf. Kāuç. 25. 36, and the स्वस्त्ययनगण, ibid.) । प्र यच्छ पर्शुं etc. सार्धपादेन (xii. 3. 31[a]) दात्रं गृह्णाति । ओषधीर्दान्तु etc. (xii. 3. 31[b]) । अधस्ताच्छेदयति । ग्रीष्मस्ते etc. (xii. 1. 36) । वेदिस्थाने व्रीहियवश्यामोमिश्रोदकेन उपस्थानं करोति । वि मिमीष्व etc. (xiii. 1. 27) । मिमानः समिध अनुमन्त्रणं (cf. Kāuç. 1. 24 fg., and sūtras 9 and 10 of this kaṇḍikā) । ततो वेदिं करोति; cf. Antyeṣṭi. fol. 14, l. 7. — [6] So emended; MSS. of the text and Ath. Paddh. प्राङ्गायतां — [7] So emended; cf. the preceding note. — [8] Cf. p. 291, note 9. —

ग्रीष्मस्ते भूम[1] इत्युपस्थाय[2]। ९। वि मिमीष्व पयस्वतीमिति[3] मिमानमनुमन्त्रयते[4]। १०।

बृहस्पते परि गृहाण वेदिं सुगा वो देवाः सदनानि सन्तु।
अस्यां बर्हिः प्रथतां साध्वन्तरहिंस्रा[5] णः पृथिवी[6] देव्यस्त्विति[7]

परिगृह्णाति[8, 9]। ११। यत्ते भूम इति[10] विखनति[11]। १२। यत्त ऊनमिति[12] संवपति[13]। १३। त्वमस्यावपनी जनानामिति ततः पांसूनन्यतोदाहार्य[14, 15, 16]। १४। बृहस्पते

---

[1] xii. 1. 36. — [2] K Ch (prim. man.) इत्युपस्थापय; cf. p. 290, note 5, end (उपस्थानं करोति). — [3] xiii. 1. 27. — [4] Cf. p. 290, note 5, end (समिध अनुमंत्रण). — [5] K साध्वन्तर्हींस्रा; Bh Antyeṣṭi. and Daç. Kar. °न्तर्हिंस्रा; Mahādeva to Kāty. Çr. ii. 2. 12 also reports हिंस्रा as a variant of अहिंस्रा. — [6] K Bh Bū and Daç. Kar., as also Kāty. Çr. ii. 2. 12, here insert the word देवी. — [7] The mantra occurs with some variants in Kāty. Çr. ii. 2. 12; its pratīka in Vāit. Sū. 2. 5. — [8] KP Ch Ku प्रतिगृह्णाति; cf. sū. 15. — [9] Daç. Kar. continues after sū. 6: ईशानकोणादारभ्य रेखां (Cod. रेषां) कुर्यात्। सर्वत्र तूष्णीं। बृहस्पते परि गृहाण etc.। कल्पच्छचा (? Cod. कल्पचच) परिमार्ष्टि। रज्जो (Cod. रज्वी) अध्यर्धशमीं श्रोखां (cf. sū. 8)। त्रयाणां पुरस्तादुत्तरवेदिं विदध्यात् (cf. sū. 7)। द्विशमी (!) प्राक् एवं चतुरस्रं (cf. su. 8) पुनः बृहस्पते परि गृहाण इति पुनः संमार्ष्टि; Ath. Paddh. and Antyeṣṭi. ईशानकोणादारभ्य तूष्णीं वालुकया रेखां (Cod. रेषा) कुर्यात्सर्वत्र। बृहस्पते etc. कल्पजातमंत्रेण चीन्वरान् वेदिरेखां परितो ऽनुमंत्रणं. — [10] xii. 1. 35. — [11] Antyeṣṭi. वेदिमध्ये विखननं करोति. — [12] xii. 1. 61c. — [13] Antyeṣṭi. अर्द्धचेन खनितं समं करोति; Daç. Kar. and Ath. Paddh. अर्द्धचेन पूरयति. — [14] MSS. पांसून°. — [15] So (°न्यतोदाहार्य, with double sandhi: cf. the introduction) Ch P; K Bū Bh °न्यतोदाहर्यं; Ku °न्यतोवहार्य्यं; E Bi °न्यतोवाहार्य. — [16] Daç. Kar. त्वमस्यावपनी etc. अर्द्धचेन समं करोति (cf. Antyeṣṭi. to the preceding sūtra); Ath. Paddh. पांसून्पूरयति. —

परि गृहाण[1] वेदिमित्युत्तरवेदिमोप्यमानां[2,3] परिगृह्णाति[4] । १५ । असंबाधं बध्यतो मानवानामिति[5] प्रथयति[6] । १६ । यस्याश्चतस्रः प्रदिशः पृथिव्या इति[7] चतुरस्रां करोति[8] । १७ । देवस्य त्वा सवितुः प्रसवे ऽश्विनोर्बाहुभ्यां पूष्णो हस्ताभ्यामा दद इति[9] लेखनमादाय यत्राग्निं निधास्यन्भवति तत्र लक्षणं करोति । १८ । इन्द्रः सीतां नि गृह्णात्विति[10] दक्षिणत आरभ्योत्तरत आलिखति । १९ । प्राचीमावृत्य[11] दक्षिणतः प्राचीम् । २० । अपरास्तिस्रो मध्ये । २१ । तस्यां[12] व्रीहियवावोप्य । २२ । वर्षेण भूमिः पृथिवी वृतावृतेत्यद्भिः[13] संप्रोक्ष्य । २३ । यस्यामन्नं व्रीहियवाविति[14] भूमिं नमस्कृत्य[15] । २४ । अथाग्निं प्रणयेत् ।

त्वामग्ने भृगवो नयन्तामङ्गिरसः[16] सदनं[17] श्रेय[18] एहि ।
विश्वकर्मा पुर एतु प्रजानन्धिष्ण्यं पन्थामनु ते दिशामेति[19] । २५ ।

---

[1] Cf. sū. 11. — [2] K °त्युत्तरं° — [3] Bū °माप्यमानां° — [4] Antyeṣṭi. परितः परिगृह्णाति; Ath. Paddh. adds: वालुकां उत्तरवेदिमध्ये निदधाति° — [5] xii. 1. 2. — [6] Daç. Kar. पूर्वं स्रवं(?) प्रथयति; Ath. Paddh. वालुकां प्रथयति° — [7] xii. 1. 4. — [8] Ath. Paddh. शांतिकपुष्टिके चतुरस्रं परिशिष्टे कुण्डलचणे उक्तं (cf. Ath. Pariç. 24. 1) see also Ath. Pariç. 22. 3 (sambhāralakṣaṇam). — [9] Cf. xix. 51. 2; TS. i. 1. 4. 2; VS. i. 10 etc.; Māitr. S. i. 1. 9, etc. — [10] iii. 17. 4. — [11] Bū प्राच्यामावृत्य; Ch Daç. Kar. and Antyeṣṭi. have a colon here. — [12] Antyeṣṭi. तासु रेखासु° — [13] xii. 1. 52c. — [14] xii. 1. 42. — [15] Daç. Kar. and Antyeṣṭi. व्रीहियवशमीमिश्रोदकेन उपस्थानं नमस्कारश्च (!) करोति° — [16] Thus emended; MSS. °माङ्गिरसः° — [17] K and Daç. Kar. सदनां° — [18] Daç. Kar. श्रिय° — [19] Ch दिशामि इति° The mantra is not found in any known Saṁhitā; cf. however Māitr. S. ii. 13. 7. —

भद्रश्रेयःस्वस्त्या[1,2,3,4] वा। २६। अग्ने प्रेहीति[5] वा। २७। विश्वंभरा वसुधानी प्रतिष्ठेति[6] लक्षणे प्रतिष्ठाप्य[7]। २८। अथेध्ममुपसमादधाति। २९। अग्निर्भूम्यामोषधीष्वग्निं दिव आ तपत्यग्निवासाः पृथिव्यसितज्ञूरेतमिध्मं समाहितं जुषाणो ऽस्मै क्षत्राणि धारयन्तमग्न इति[8] पञ्चभि[9]स्तरणम्[10]। ३०। अत ऊर्ध्वं बर्हिषः। ३१। त्वं भूमिमत्येष्योजसेति[11] दर्भान्संप्रोक्ष्य। ३२। ऋषीणां प्रस्तरो ऽसीति[12] दक्षिणतो ऽग्नेर्ब्रह्मासनं निदधाति[13]। ३३। पुरस्तादग्नेरुदक्संस्तृणाति। ३४। तथा प्रत्यक्। ३५। उदक्षिणं बर्हिषां

---

[1] P Bü Bh and Ath. Paddh. भद्रः. — [2] Ch Ku श्रेय. — [3] Ku स्वस्त्या. — [4] Daç. Kar. treats the passage contained in the two sūtras ending here as follows: It coincides with the Kāuçika as regards the first three pādas of the mantra, then continues: धिष्ण्यं पन्थामनु ते दिशामः। भद्रं पन्थामनु ते दिशामः। श्रेयं (!) पंथामनु ते दिशामः। स्वस्त्यं पन्थामनु ते दिशामः। भद्रो भव श्रेयो भव स्वस्त्यो भव व्रीहियवावप्नौ प्रक्षिप्य: Ath. Paddh. त्वामग्ने भृगवो नयंतामिति अग्निप्रणयनं। भद्रो भवेति भद्रः श्रेयः स्वस्त्या वा। चकारो (! for वा°) निश्चयार्थः। भद्रो भवेति त्रिभिः। सर्वत्र. — [5] iv. 14. 5; Ath. Paddh. अग्ने प्रेहीति वा विकल्पादाज्यतंत्रे। न पाकतंत्र इति पद्धतिकारः. — [6] xii. 1. 6. — [7] Daç. Kar. अग्निं स्थापयति; Ath. Paddh. अग्निप्रतिष्ठापनं. — [8] xii. 1. 19. 20, 21; x. 6. 35; vii. 78. 2. — [9] Bü E P Bi पंचभिः. — [10] Daç. Kar. अमुककर्मप्रारंभनिमित्तं पंचेध्मं सकृज्जुहोति; Ath. Paddh. अग्निर्भूम्यामिति तिसृभिरुपसमादधाति अस्मै क्षत्राणीतमिध्ममिति वा। वाशब्दात्। आज्यतंत्रे। एतमिध्ममस्मै क्षत्राणि धारयंतमिति भवति। पंचभिरिध्मं जुहोति. — [11] The mantra of which the pratīka is here given occurs in सकलपाठ in Kāuç. 2. 1. It occurs also at xix. 33. 3, but the सकलपाठ and the scholiast's designation (Kāuç. 2. 1) as कल्पजा show that it is regarded as not belonging to the AV. — [12] xvi. 2. 6. — [13] The same passage occurs at Kāuç. 2. 18. —

मूलानि छादयन्तोत्तरस्या[1] वेदिश्रोणेः[2] पूर्वोत्तरतः संस्थाप्य । ३६ । अहे दैधिषव्योदतस्तिष्ठान्यस्य सदने सीद योऽस्मत्पाकतर[3] इति ब्रह्मासनमन्वीक्षते[4] । ३७ । निरस्तः पराग्वसुः सह पाप्मना निरस्तः सो ऽस्तु यो ऽस्मान्द्वेष्टि यं च वयं द्विष्म[5] इति दक्षिणा तृणं निरस्यति । ३८ । तदन्वालभ्य जपतीदमहमर्वाग्वसोः सदने सीदाम्यृतस्य सदने सीदामि सत्यस्य सदने सीदामीष्टस्य सदने सीदामि पूर्तस्य सदने सीदामि मामृषदेव बर्हिः[6] स्वासस्थं त्वाध्यासदेयमूर्णम्रदमनभिशोकम्[7, 8] । ३९ । विमृग्वरीमित्युपविश्यासनीयं[9, 10] ब्रह्मजपं जपति बृहस्पतिर्ब्रह्मा[11] ब्रह्मसदन आसिष्यते[12] बृहस्पते यज्ञं गोपाय यदुद्वत[13] उन्नि-

---

[1] So with double sandhi (? for छादयन्त उत्तरस्या) E only; KPBh छादयन्नोत्तरस्य; Ch छादयंनो°; P छादयत्तो°; Ku छादयतोंतरस्या; Bū illegible. — [2] So Ku E Ch (sec. man.); K P Ch (prim. man.) वेदिश्रोणेः; Bū वेदिः श्रोणिः; Bi वेदिः श्रोणेः. — [3] Cf. TS. iii. 2. 4. 4; Kāty. Çr. ii. 1. 22; Vāit. Sū. 1. 20; Kāuç. 3. 5. — [4] Ch °सनमीचते, as in Kāty. Çr. The passage beginning with this sūtra and ending with sū. 40 is identical with Kāuç. 3. 5-8; see the notes there. — [5] Cf. Kāty. Çr. ii. 1. 21; Çat. Br. i. 5. 1. 23; Çāñkh. Çr. i. 6. 6; Lāṭy. Çr. ii. 4. 5; iv. 9. 16; Gobh. Gṛ. i. 6. 14; Kāuç. 3. 6 (Çat. Br., Lāṭy., and Gobh. with the variant परावसुः). — [6] K बर्हि. — [7] Bi and Daç. Kar. °मूर्णमृदम°; Bh Ku °मूर्णम्रदम°. — [8] Cf. Āçv. Çr. i. 4. 7; Çāñkh. Çr. i. 6. 9; Lāṭy. Çr. ii. 4. 5; Kāuç. 3. 7. — [9] xii. 1. 29. — [10] So (°सनीयं) E Bū, and Ath. Paddh.; Ku °सने; the rest °सनीं. — [11] The word ब्रह्मा is wanting in K. — [12] Thus emended; MSS. here, as in Kāuç. 3. 8, आशिप्यते. — [13] So emended, assuming haplographia in the reading यदुद्वत (Ch Ku); E reads यदुद्यत; Daç. Kar. य उदन्वत; the rest य उदुद्वत; cf. also Kāuç. 3. 8, note 9. —

वतः[1] शकेयम्[2,3] । ४० । पातं मा द्यावापृथिवी अघान्न[4] इति द्यावापृथिव्यौ समीक्षते । ४१ । सविता प्रसवानामिति[5] कर्मणिकर्मण्यभितो ऽभ्यातानैराज्यं जुहुयात्[6] । ४२ । व्याख्यातं सर्वपाकयज्ञियं[7] तन्त्रम् । ४३ । ॥ १ ॥ ॥ १३७ ॥

अष्टकायामष्टकाहोमाञ्जुहुयात् । १ । तस्या हवींषि धानाः करम्भः शष्कुल्यः[8] पुरोडाश उदौदनः[9] क्षीरौदनस्तिलौदनो यथोपपादिपशुः[10] । २ । सर्वेषां हविषां समुद्धृत्य । ३ । दर्व्या जुहुयात्प्रथमा ह व्युवास सेति पञ्चभिः[11] । ४ । आयमागन्संवत्सर इति चतसृभिर्विज्ञायते[12] । ५ । ऋतुभ्यस्त्वेति[13] विग्राहमष्टौ । ६ । इन्द्रपुत्र[14] इत्यष्टादशीम् । ७ । अहोरात्राभ्यामित्यूनविंशीम्[15] । ८ । पशावुपपद्यमाने

---

[1] Thus emended; Ch Ku K P E उन्नमतः; Bü Bi and Daç. Kar. उन्निमतः; cf. for the treatment of this passage the note on p. 9 (Kāuç. 3. 8). — [2] The word इति is wanting in all MSS., perhaps because the text continues with a mantra? — [3] Cf. TS. iii. 2. 4. 4; Kāuç. 3. 8. — [4] So emended; Bü अघान्न (?); P Bh द्यां न; Ch द्यांन्न; K Ku धान्न; Bi घ न; E धान्न; Daç. Kar. भ्यां न. Or is द्यां न to be taken into the text as a separate pratika? — [5] v. 24. 1. — [6] Daç. Kar. अभ्यातानानि जुहोति । सविता प्रसवानां etc. । इत्यभ्यातानमिति समाप्तः (!); Ath. Paddh. सविता प्रसवानामिति । अभ्यातानांतं प्राक्तंत्रं । इति बृहत्कुधंडिका समाप्ताः (!) । अभ्यातानाद्युत्तरतंत्रं । अथ उत्तरतंत्रमुच्यते etc., see Kāuç. 5. 5, note. — [7] K Bü Bh सव°; cf. for this varia lectio Kāuç. 59. 24; 60. 1. — [8] P Bi Bh शः कुल्यः; K E शकुल्यः. — [9] E has a colon here. — [10] E Ch (sec. man.) यथोपपादे पशुः. — [11] iii. 10. 1-5. — [12] iii. 10. 8-11. — [13] iii. 10. 10. K reads ऋतुभ्यद्वेति. — [14] iii. 10. 13. — [15] vi. 128. 3. —

दक्षिणं बाहुं निर्लोमं सचर्म[1] सखुरं प्रक्षाल्य[2] । ९ । इडायास्पदमिति द्वाभ्यां[3] विंशीम् । १० । अनुपपद्यमान[4] आज्यं जुहुयात् । ११ । हविषां दर्विं पूरयित्वा पूर्णा दर्वे इति[5] सदर्वीमेकविंशीम् । १२ । एकविंशतिसंस्थो यज्ञो विज्ञायते । १३ । सर्वा एव यज्ञतनूरवरुन्द्धे[6] सर्वा एवास्य यज्ञतनूः[7] पितरमुपजीवन्ति य एवमष्टकामुपैति । १४ । न दर्विहोमे न हस्तहोमे न पूर्णहोमे तन्त्रं क्रियेतेत्येके । १५ । अष्टकायां क्रियेतेतीषुफालिमाठरौ । १६ । ॥ २ ॥ ॥ १३८ ॥

अभिजिति शिष्यानुपनीय श्वो भूते संभारान्संभरति । १ । दधिसक्तून्पालाशं दण्डमहते वसने भुङ्गमाज्यं शान्ता ओषधीर्नवमुदकुम्भम् । २ । बाह्यतः शान्तवृक्षस्येध्मं प्राञ्चमुपसमाधाय । ३ । परिसमुह्य पर्युक्ष्य परिस्तीर्य बर्हिरुदपात्रमुपसाद्य परिचरणेनाज्यं परिचर्य । ४ । नित्यान्पुरस्ताद्धोमान्हुत्वाज्यभागौ च[8] । ५ । पश्चादग्नेर्दधिसक्तूञ्जुहोत्यग्नये ब्रह्मप्रजापतिभ्यां भृग्वङ्गिरोभ्य उशनसे काव्याय । ६ । ततो ऽभयैरपराजितैर्गणकर्मभिर्विश्वकर्म-

---

[1] E सचर्म; P Bi सचर्मां; Ku सर्वेमं. — [2] All MSS. neglect the sandhi between this and the next word, writing प्रचाल्य इडा°. — [3] iii. 10. 6–7. — [4] P Ku E Ch (sec. man.) पश्चावनुपपद्यमान; cf. sū. 9. — [5] iii. 10. 7°. — [6] MSS. °रुंधे. — [7] So all MSS.; is the word to be emended to °तन्वः? — [8] For the passage beginning with sū. 3 and ending here cf. Kāuç. 135. 4–7. —

भिरायुष्यैः[1] स्वस्त्ययनैराज्यं[2] जुहुयात् । ७ । मा नो देवा अहिर्वधीदरसस्य शर्कोटस्येन्द्रस्य प्रथमो रथो यस्ते सर्पो वृश्चिकस्तृष्टदंश्मा नमस्ते अस्तु विद्युत आरे ऽसावस्मदस्तु यस्ते पृथु स्तनयित्नुरिति[3] संस्थाप्य होमान् । ८ । प्रतिष्ठाप्य स्रुवं दधिसक्तून्प्राश्याचम्योदकमुपसमारभन्ते[4] । ९ । अव्यचसश्चेति[5] जपित्वा सावित्रीं[6] ब्रह्म जज्ञानमित्येकां[7] त्रिषप्तीयं[8] च षड्ढो वाचयेत् । १० । शेषमनुवाकस्य[9] जपन्ति । ११ । योयो[10] भोगः कर्तव्यो भवति तंतं कुर्वते । १२ । स खल्वेतं[11] पक्षमपक्षीयमाणः पक्षमनधीयान उपश्राम्येता दर्शात्[12] । १३ । दृष्टे चन्द्रमसि फल्गुनीषु द्वयान्नसानुपसादयति । १४ । विश्वे देवा अहं रुद्रेभिः सिंहे व्याघ्रे यशो हविर्यशसं मेन्द्रो गिरावरागराटेषु यथा सोमः प्रातःसवने यच्च वर्चो अक्षेषु येन महानघ्न्या जघनं स्वाहेत्यग्नौ[13] हुत्वा । १५ । रसेषु संपातानानीय संस्थाप्य हो-

[1] E P Bi Bh °युष्ये. — [2] For the gaṇas of hymns mentioned here cf. the following places: the first अभयगण at Kāuç. 16. 8, and note; the second अभयगण at 104. 3, and note; the अपराजितगण at 14. 7, and note; the गणकर्मगण at 26. 33, and note; the विश्वकर्मगण at 7. 8, and note; the आयुष्यगण at 54. 11, and note; the स्वस्त्ययनगण at 25. 36, and note. — [3] vi. 56. 1; vii. 56. 5; x. 4. 1; xii. 1. 46; i. 13. 1; 26. 1; vii. 11. 1. — [4] Bi °रभते. — [5] xix. 68. 1 (all MSS. in agreement with the MSS. of the AV. अव्यसश्चेति). — [6] RV. iii. 62. 10; also VS. TS. SV. etc. — [7] iv. 1. 1. — [8] Ch E P Bi Bh त्रिषप्तीं, i. 1; cf. Kāuç. 7. 8. — [9] iv. 1. 2 — iv. 5. 7. — [10] E has an avagraha here. — [11] Bū खल्वेनं. — [12] Thus emended; Ch Ku E Bi Bū उपश्राम्येतादर्शादृष्टे; K P Bh °द्रष्टे. — [13] i. 30. 1; iv. 30. 1; vi. 38. 1; 39. 1; 58. 1; 69. 1; ix. 1. 11; xiv. 1. 35, 36; cf. the two वर्चस्यगण, Kāuç. 12. 10, note, and 13. 1, note. —

मान् । १६ । तत एतान्प्राशयति[1] रसान्मधुघृताञ्छिष्यान्[2] । १७ । योयो भोगः कर्तव्यो भवति तंतं कुर्वते । १८ । नान्यत आगताञ्छिष्यान्परिगृह्णीयात्परसंदीक्षितत्वात्[3] । १९ । त्रिरात्रोनांश्चतुरो मासाञ्छिष्येभ्यः[4] प्रब्रूयादर्धपञ्चमान्वा । २० । पादं पूर्वरात्रे ऽधीयानः पादमपररात्रे मध्यरात्रे स्वपन् ।२१। अभुक्त्वा पूर्वरात्रे ऽधीयान[5] इत्येके । २२ । यथाशक्त्यपररात्रे दुष्परिमाणो[6] ह पादः । २३ । पौषस्यापरपक्षे त्रिरात्रं नाधीयीत । २४ । तृतीयस्याः प्रातः समासं संदिश्य यस्मात्कोशादित्यन्तः[7] । २५ ।

यस्मात्कोशादुदभराम वेदं तस्मिन्नन्तरव दध्म एनम् ।
अधीतमिष्टं[8] ब्रह्मणो[9] वीर्येण तेन मा देवास्तपसावतेहेति । २६ ।

योयो भोगः कर्तव्यो भवति तंतं कुर्वते । २७ । ये परिमोक्षं कामयन्ते ते परिमुच्यन्ते । २८ । ॥ ३ ॥ ॥ १३९ ॥

अथ राज्ञामिन्द्रमहस्योपाचारकल्पं[10,11] व्याख्यास्यामः

---

[1] E P B एना°. — [2] K °ताञ्छिष्यान्; the rest °तां छि°. — [3] K °गताञ्छिष्या°; the rest °गतां छि°. — [4] K मासाञ्छि°; the rest मासां छि°. — [5] Thus E; P °धीयंत; Bi °धीयातः; Ku °धीयोत; the rest धीयत. — [6] Ch दुष्परिणामो. — [7] Cf. xix. 72. 1. — [8] So all MSS.; the vulgate version, xix. 72. 1c, reads कृतमिष्टं. — [9] E ब्राह्मणो. — [10] Ath. Pariç. 19, which also treats the इन्द्रमहोत्सव, largely coincides with this kaṇḍikā; 19. 1 reads राज्ञामिन्द्रमहोत्सवस्योपचारकल्पं. — [11] E P Bi and Ath. Pariç. 19. 1, °पचार°; cf. Kauç. 67. 5. —

।१। प्रोष्ठपदे[1] शुक्लपक्षे ऽश्वयुजे वाष्टम्यां प्रवेशः ।२। श्रवणेनोत्थापनम् ।३। संभृतेषु[2] संभारेषु ब्रह्मा राजा चोभौ स्नातावहतवसनौ सुरभिणौ व्रतवन्तौ कर्मण्यावुपवसतः[3] ।४। श्वो भूते शं नो देव्याः[4] पादैरर्धर्चाभ्यामृचा षट्कृत्वोदकमाचामतः[5, 6] ।५। अर्वाञ्चमिन्द्रं त्रातारमिन्द्रः सुत्रामेत्याज्यं[7] हुत्वा ।६। अथेन्द्रमुत्थापयन्ति ।७। आ त्वाहार्षं ध्रुवा द्यौर्विशस्त्वा सर्वा वाञ्छन्त्विति[8] सर्वतो ऽप्रमत्ता धारयेरन् ।८। अद्भुतं हि विमानोत्थितमुपतिष्ठन्ते[9] ।९। अभिभूर्यज्ञ इत्येतैस्त्रिभिः सूक्तैरन्वारब्धे[10] राजनि पूर्णहोमं जुहुयात् ।१०। अथ पशूनामुपाचारम्[11, 12] ।११। इन्द्रदेवताः स्युः ।१२। ये राज्ञो भृत्याः[13] स्युः सर्वे

---

[1] Ch and Ath. Pariç. प्रोष्ट°; P Bh प्रौष्ट°. — [2] Bi here inserts साविकेषु. — [3] So Bū Ku; Ch E P Bi and Ath. Pariç. 19. 1, °पवसथः; K Bh °पवसथ (श्वो). Cf. Kāuç. 67. 17. — [4] i. 6. 1. — [5] Thus (षट्कृत्वो°) with double sandhi (षट्कृत्वस् उ°) all MSS. of the text, and Ath. Pariç. 19. 1; cf. the introduction. — [6] Bi °चामंतो (ऽर्वाञ्च); Ath. Pariç. 19. 1 . . . षट्कृत्वोदकं परि वाचमाचांतौ (one MS. परिवामाचांतो) बर्हिरुपकल्पयित्वा राजानमन्वालभ्य जुहुयात्. — [7] v. 3. 11; vii. 86. 1; vii. 91. 1; Ath. Pariç. 19. 1, अर्वांचमिंद्रं त्रातारमिंद्रः सुत्रामेममिंद्र वर्धय क्षत्रियं मे हंताय वृषेंद्रस्येंद्रो जयातीति च। राष्ट्रसंसर्गश्चाथेंद्रमुत्थापयंति. The pratīkas in addition to those of the Kāuçika are: iv. 22. 1; (?हंताय?); vi. 86. 1; 98. 1. — [8] vi. 87. 1; 87. 1c; 88. 1. — [9] Bū E Ch (prim. man.) विनामो°; Ath. Pariç. 19. 1, अद्भुतं हि सवनानयेत्समुत्थितं (!for सवान°?) भवति यदि प्राच्यामग्निभयं। यदि दक्षिणस्यां यमभयं। यदि प्रतीच्यां वरुणभयं। यद्युदीच्यां यज्ञयं (?one MS. चुज्ञयं?)। यदंतर्देशेभ्यो भयतो विद्यादग्निर्मा पात्वग्निं ते वसुमंतमृच्छंत्विति (MSS. °मिच्छंत्विति; xix. 17. 1; 18. 1) . . . — [10] vi. 97–99. — [11] Ch E पाशू°. — [12] Thus K Bū Bh Ch (prim. man.) and Ath. Pariç. 19, 3; the rest °पचारम्. — [13] Bū भृत्या. —

दीक्षिता ब्रह्मचारिणः[1] स्युः । १३ । इन्द्रं चोपसद्य यजेरं-स्त्रिरात्रं पञ्चरात्रं[2] वा । १४ । त्रिरयनमह्नामुपतिष्ठन्ते[3] हविषा[4] च यजन्ते । १५ । आवृत[5] इन्द्रमहमिति[6] । १६ । इन्द्र क्षत्रमिति[7] हविषो हुत्वा ब्राह्मणान्परिचरेयुः[8] । १७ । न संस्थितहोमाञ्जुहुयादित्याहुराचार्याः । १८ । इन्द्र-स्यावभृथादिन्द्रमवभृथाय व्रजन्ति[9] । १९ । अपां सूक्तैरा-प्लुत्य[10] प्रदक्षिणमावृत्याप उपस्पृश्यानवेक्षमाणाः[11] प्रत्यु-दाव्रजन्ति । २० । ब्राह्मणान्भक्तेनोपेप्सन्ति[12] । २१ । श्वः-श्वो ऽस्य राष्ट्रं ज्यायो भवत्येको ऽस्यां पृथिव्यां राजा भव-ति न पुरा जरसः प्रमीयते य एवं वेद यश्चैवं विद्वानि-न्द्रमहेण चरति । २२ । ॥ ४ ॥ ॥ १४० ॥

अथ वेदस्याध्ययनविधिं वक्ष्यामः । १ । श्रावण्यां प्रौष्ठपद्यां[13] वोपाकृत्यार्धपञ्चमान्मासानधीयीरन् । २ । एवं छन्दांसि । ३ । लोम्नां[14] चानिवर्तनम्[15] । ४ ।

---

[1] K Bū Ch °चारिण. — [2] Ath. Pariç. 19. 3, सप्तरात्रं. — [3] So with very doubtful emendation; all MSS. of the text and Ath. Pariç. 19. 3, त्रिरयनमह्नम°. — [4] Ch (prim. man.) हविषां. — [5] MSS. of Ath. Pariç. 19. 3 यजंते ॥ आवृत (इंद्र°). — [6] iii. 15. 1. — [7] vii. 84. 2. — [8] Ath. Pariç. 19. 3, ब्राह्मणान्स्वस्तिवाच्य (!). — [9] Ath. Pariç. 19. 3 has for this sūtra simply the words इंद्रमवभृथाय व्रजंति. — [10] For the अपां सूक्तानि see Kāuç. 7. 14, and Dārila, ibid. — [11] Thus emended; Ch Ku °पेक्ष्यमाणाः; the rest °वेक्ष्यमाणाः; MSS. of Ath. Pariç. 19. 3, °पेक्षमाणाः; cf. Kāuç. 7. 14, note. — [12] Ath. Pariç. 19. 3, ब्राह्मणान् भक्त्या यदीप्सितं वरप्रदानैः परितोषयेत्. — [13] Bū प्रोष्ठ°. — [14] Ku लोम्ना. — [15] So Ku; Ch चानिवर्तवन्न°; the rest स्थानिवर्तनं (as though स्थान्निवर्तनं?). —

अर्धमासं चोपाकृत्य क्षपेरंस्त्र्यहमुत्सृज्य ।
आरम्भः श्रावण्यामुक्तः पौष्यामुत्सर्ग उच्यते[1] ॥ ५ ।
अथानध्यायान्वक्ष्यामः । ६ । ब्रह्मज्येषु[2] निवर्तते[3] । ७ ।
श्राद्धे । ८ । सूतकोत्थानछर्दनेषु[4] त्रिषु चरणम्[5] । ९ । आ-
चार्यास्तमिते[6] वा येषां च मानुषी योनिः[7] । १० ।
यथाश्राद्धं तथैव तेषु । ११ । सर्वं च श्राद्धिकं द्रव्यमद-
साहव्यपेतं[8] प्रतिगृह्यानध्यायः । १२ । प्राणि चाप्राणि च
। १३ । दन्तधावने । १४ । क्षुरसंस्पर्शे । १५ । प्रादुष्कृते-
ष्वग्निषु । १६ । विद्युतार्धरात्रे स्तनिते । १७ । सप्तकृत्वो
वर्षेण विरत[9] आप्रातराशम् । १८ । वृष्टे[10] । १९ । निर्घाते[11]
। २० । भूमिचलने । २१ । ज्योतिषोपसर्जन[12, 13] ऋताव-
प्याकालम्[14, 15] । २२ विषमे न प्रवृत्तिः[16] । २३ ।
अथ प्रमाणं वक्ष्यामः समानं विद्युदुल्कयोः[17] ।

---

[1] K Ku Bū Ch E have a colon here. — [2] Ku E Bi Bh ब्रह्मयेषु. — [3] Bū निवर्ततो. The passage beginning with अथ and ending here seems to be an ardharca; Ku Ch have a colon here. — [4] K P Bh °त्यान:°; Bū, the same with a colon after the word; Ku °त्याने°; E सूतकोत्वाने (!). — [5] Is the passage, beginning with श्राद्धे, and ending here, an ardharca? — [6] Thus with double sandhi (for आचार्य अस्तमिते) all MSS.; cf. the introduction. — [7] The passage beginning with आचार्य and ending here seems to be an ardharca. — [8] So all MSS. except Ku, which reads द्रव्यमदत्साहव्यपेत्वं. Is the passage to be emended to द्रव्यमदशाहव्यपेतं, or द्रव्यं मदोत्साहव्यपेतं? — [9] E विरेत; P Bh विरता. — [10] Ku वृष्टौ. — [11] Ku निर्घाते. — [12] So ज्योतिषोप° for ज्योतिष उप° (or ज्योतिषामुप°?), with double sandhi, all MSS.; cf. the introduction. — [13] E Bh °सर्जने (ऋता°); Ku °सर्जने. — [14] Ch Bi कृता°; Ku जाता°. — [15] Ku Ch (prim. man.) °वष्पाकालं. — [16] K प्रवृत्तिः ॥ अथ; the rest प्रवृत्तिरथ. — [17] The colon is written only in K Bū; the rest read °ल्कयोर्मार्ग°. —

मार्गशीर्षपौषमाघापरपक्षेषु तिस्रो ऽष्टकाः[1] ॥ २४ ।
अमावास्यायां च । २५ । त्रीणि चानध्यानि[2, 3] । २६ ।

जनने मरणे चैव दशरात्रो[4] विधीयते[5] ।
आचार्ये दशरात्रं[6] स्यात्सर्वेषु च स्वयोनिषु[7] ॥ २७ ।

सूतके त्वेको नाधीयीत त्रिरात्रमुपाध्यायं वर्जयेत्[8] । २८ । आचार्यपुत्रभार्याश्च[9, 10] । २९ । अथ शिष्यं सहाध्यायिनमप्रधानगुरुं चोपसन्नमहोरात्रं वर्जयेत्[11] । ३० । तथा सब्रह्मचारिणं[12] राजानं च । ३१ । अपर्तुदैवमाकालम् । ३२ ।

अविशेषर्तुकालेन[13] सर्वे निर्घातादयः स्मृताः[14] ।
यच्चान्यद्दैवमद्भुतं सर्वं निर्घातवद्भवेत्[15] ॥ ३३ ।
ऋतावध्यायश्छान्दसः काल्य[16] आपर्तुकः स्मृतः ।
ऋतावूर्ध्वं[17] प्रातराशाद्यस्तु कश्चिदनध्यायः ।
संध्यां प्राप्नोति पश्चिमाम्[18] ॥ ३४ ।

---

[1] The colon is written only in K Ch; the rest read ष्टका अमा°. — [2] E वा°; Bü च°. — [3] Thus (°नध्यानि) all MSS. Is the word to be emended to चानध्ययनानि (supposing that haplographia has taken place)? — [4] Ku °रात्री. — [5] The colon is written in K Ku Bü Ch E. — [6] Thus all MSS.; cf. दशरात्रो in the preceding line. — [7] The colon is written in K Ku Bü Ch E. — [8] K P B have a colon here; the rest वर्जयेदाचार्य°. Is the passage to be regarded as metrical? — [9] Thus emended: Ku E °भार्या च; the rest भार्या च. Cf. the Vāsiṣṭhadharmaçāstra xiii.40. — [10] E °वा(च). — [11] K Bh Bi have a colon here; the rest वर्जयेत्तथा. — [12] Ch Ku च ब्रह्मचारिणं. — [13] So emended; Ch Ku अविशेपार्तु°; E अविशेपार्त°; Bi अविशेपांतु; Bh अविशेपांत्तु; P अविशेपात्तु; Bü अविषपात्तु. — [14] All MSS. have a colon here. — [15] K Ch Ku E have a colon here. — [16] Thus K P Bh; Ku E Bi Ch (prim. man.) कान्य; Ch (sec. man.) काल्य; Bü काल्या. — [17] Thus emended; Ku ऋता ऊर्ध्वं; Bü ऋतावार्द्दं, Ch (prim. man.) ऋतावार्ध्वं; Bi चेतावोर्ध्वं; the rest ऋतावोर्ध्वं. — [18] Bü E have a colon here. —

सर्वेण प्रदोषो लुप्यते[1] । ३५ । निशि निगदायां[2] च वि-
द्युति शिष्टं नाधीयीत । ३६ ।

अस्तमिते[3] द्विसत्तायां[4] त्रिसत्तायां[5] च पाटवः[6] ।
अथ[7] तावत्कालं भुक्त्वा पदोष[8] उभे संध्ये[9] ॥ ३७ ।
अप्सु श्मशाने शय्यायामभिशस्ते खिलेषु च[10] ।
अन्तःशवे[11] रथ्यायां[12] ग्रामे चाण्डालसंयुते[13, 14] ॥ ३८ ।
दुर्गन्धे शूद्रसंश्रावे पैङ्गे[15] शब्दे भये रुते[16, 17] ।
वैधृत्ये[18] नगरेषु च[19] ॥ ३९ ।
अनिक्तेन च वाससा[20] चरितं येन मैथुनम्[21] ।
शयानः[22] प्रौढपादो[23] चायतोपस्थान्तिके[24] गुरोः[25]॥४०।
विरम्य मारुते शीघ्रे प्रत्यारम्भो विभाषितः[26] ।

---

[1] K लिप्यते. — [2] So all MSS. Does the word represent the locative fem. sing. of an adjective निगद् 'sounding in', or is it to be emended to the loc. sing. fem. of the participle perfect निगतायां having gone into (the earth)? Or निःशब्दायां? — [3] So (नाधीयीता)-स्तमिते Ku; Bū Bi नाधीयोत स्तनिते; the rest नाधीयीत स्तमिते. — [4] Ku द्विसतायां. — [5] Bū तृ°; Ku °सतायां. — [6] Bū पाठवो(प्य); the rest पाटवो(थ). None of the MSS. exhibit a colon. — [7] Wanting in K; Bū reads (पाठवो) प्य. — [8] Bū प्रदोषो. — [9] Bū संधेष्व(प्सु); Bi संधे. The colon is written in Bi only. — [10] K Bi have a colon here; the rest च(न्त:). — [11] K P E °शवे; Bi °श्रान्ये. — [12] Ch E have a colon here. — [13] K Bū चण्डाल°. — [14] K Ku P Bū have a colon here. — [15] Ch Ku K E पैङ्के; Bū पैण्ठे. — [16] Ku ऋते; Ch कृते. — [17] K Ku Bū Ch have a colon here. — [18] K B वैधृते. — [19] E च । अनिक्तेन; the rest चानिक्तेन. — [20] Ku seems to have a colon here. — [21] The colon is written only in E. — [22] Bi has a colon here. — [23] Thus emended (cf. Manu iv. 112). Bū प्रोढपादी; the rest प्रौढपादी. — [24] Thus with double sandhi (for चायत उप°) all MSS.; cf. the introduction. — [25] The colon is written in Bū. — [26] The colon is written in K Ku Ch E. —

सर्वेणापरराचेण विरम्य प्रत्यारम्भो न विद्यते[1] ॥ ४१ । पौषी[2] प्रमाणमभ्रेष्वापर्तु चेदधीयानाम्[3] । ४२ । वर्षं[4] विद्युत्स्तनयित्नुर्वा विपद्यते[5] । ४३ । त्रिरात्रं स्थानासनं ब्रह्मचर्यमरसाशं[6] चोपेयुः[7] । ४४ । सा तत्र प्रायश्चित्तिः सा तत्र प्रायश्चित्तिः । ४५ । ॥ ५ ॥ ॥ १४१ ॥

॥ इत्यथर्ववेदे कौशिकसूत्रे चतुर्दशोऽध्यायः समाप्तः ॥

॥ इति कौशिकसूत्रं समाप्तम् ॥

---

[1] The colon is written in K Ku Ch E Bū. — [2] Bū पोषी. — [3] Ku वेद°. Is this passage an ardha-çloka, and is the last word to be emended to चेदधीयानानां (with haplographia)? — [4] Bū वर्ष. — [5] Bū विपर्यते; E has a colon here. — [6] K Bh Bū °रसाः-शं; Ku °रसासं. — [7] E has a colon here. —

# Extracts from the Paddhati of Keçava.

Keçava has the following introduction with which that of the Atharva-paddhati is identical: अथर्ववेदस्य संहिताविधिर्विवरणं क्रियते। तत्र अथर्ववेदस्य नव भेदा भवन्ति। तत्र चतसृषु शाखासु शौनकादिषु कौशिको ऽयं संहिताविधिः स च गोपथब्राह्मणादर्थवादादि परित्यज्य विधिमात्रं कल्पयित्वा विधेः कृतसूत्रयथोपयोगं (!) टोका क्रियते। संहिताविधिः. Cf. the author in the Journal of the American Oriental Society, vol. xi, pp. 375–7.

## Kaṇḍikā 1.

sū. 1. अथशब्द आनन्तर्यार्थः (Cod. आनंतयार्थः) संहिताध्ययनानन्तरं विधेरधिकारः संहिताविधिं वक्ष्यामः। शान्तिकपौष्टिकाभिचारिकाद्भुतादीनि कर्माणि संहिताविधौ उक्तानि। त्रिविधानि कर्माणि विधिकर्माणि अविधिकर्माणि उक्थ्यकर्माणि त्रिःप्रमाणको विधिः प्रत्यक्षं अनुमानं शब्दं चेति. — sū. 2–8. Keçava's comment is essentially the same as that of the Ath. Paddh. The following passage occurs in both texts in connection with sū. 8: उपवर्षाचार्येणोक्तं। मीमांसायां स्मृतिपादे कल्पसूत्राधिकरणे नक्षत्रकल्पो वितानकल्पस्तृतीयः संहिताकल्पश्चतुर्थो अंगिरसा (Ath. Paddh. आंगिरस°) कल्पः शान्तिकल्पस्तु पञ्चमः। एते कल्पा वेदतुल्या हि इति भगवानुपवर्षाचार्येण (!) प्रतिपादित। अन्ये कल्पाः स्मृतितुल्याः. Cf. J. A. O. S. vol. xi. p. 377. — sū. 9–14. Keçava's comment is again essentially the same as that of the Ath. Paddh. — sū. 15–16. प्रागुदक्त्वा कर्मसमाप्तिर्दैवकर्मसु दक्षिणा प्रत्यक्समाप्तिः पितृकर्मसु केचित्प्रागुदगन्तराले समाप्तिः — sū. 16. Keç. is

identical with Ath. Paddh. — sū. 17. Keç. illustrates: यथा परि त्वाग्ने पुरं वयमिति त्रिः पर्यग्निं करोति. See Kāuç. 2. 10. — sū. 26. अग्निं पृष्ठतो नावसेत. — sū. 29-30. शांखायनीये (Cod. सांख्यायनीये: cf. Lindner, Das Kauṣītaki Brāhmaṇa, p. ix) ब्राह्मणे उक्ते द्वे पौर्णमास्यौ द्वे अमावास्ये इति पौर्णमास्याः प्रतिपदिति अमावास्यायाः प्रतिपदिति पूर्वा उपोष्या उत्तरा याज्या . . . Cf. Kāuṣ. Br. 3. 1. — sū. 31. तिथिभेदे मुख्यपौर्णमासीभेदे या पूर्वा सा उपोष्या । उपवासं करोति. —

## Kaṇḍikā 2.

Introductory: सायंप्रातर्होमवैश्वदेवपिण्डपितृयज्ञादि (!) उद्धृते ऽग्नौ कार्याणि. — sū. 17 (note 10). Keç. also reads ऊर्णं म्रदं. — sū. 18 (note 15). भूपत इति ब्रह्मवरणं । तथा च गोभिलब्राह्मण: (!) प्रत्यचं वा दर्भमयं वा आसनं वा उदकमण्डलुं वा ब्रह्मस्थापने वा कुर्यात्. —

## Kaṇḍikā 3.

sū. 1 (note 9). Keç. like Dārila places the matter of this sūtra at the end of the preceding kaṇḍikā: युनज्मि त्वेति त्रिभिः पंचभिरिध्ममुपसमादधाति । द्वितीया कण्डिका. — sū. 2 (note 11) ...जागमायनमुदपात्रं कांस्यपात्रमुपसाद्य. — sū. 4 (note 9). जीवा स्थेति सूक्तेन त्रिराचामति सत्यं बृहदिति नवभिः शंतिवेत्यृचा उदायुषेति द्वाभ्यां उत्तिष्ठति (cf. Kāuç. 24. 31). —

## Kaṇḍikā 4.

sū. 9 (note 9). उद्देनमुत्तरं नयेति त्रिभिर्ऋग्भिः (!) प्रजापते न त्वदिति (vii. 80. 3) च चतस्रश्चर्वाज्यतोर्जुहोति (cf. Kāuç. 5. 9) । त्वामग्न इत्यृचा (xix. 59. 1) चतस्र आज्याहुतीर्जुहोति. —

## Kaṇḍikā 5.

sū. 13. स्वाहिष्टेभ्य इत्येवमादिभिरेकादशभिः सर्वप्रायश्चित्तीयाञ्जुहोति यन्मे स्कन्नं पुनर्मैत्विंद्रियमिति च द्वाभ्यामृग्भ्यां. Cf. also the beginning of the next kaṇḍikā. —

## Kaṇḍikā 6.

sū. 10 (note 1). Keç. reads °निसितः. — sū. 16 (note 13). भगन्म स्वरिति पर्यायद्वयेन; cf. Ath. Paddh. ibid. — sū. 17 (note 5).

Keç. as the text, पत्न्यांजलौ. — sū. 22. तस्मान्नादक्षिणं हविःशब्दे-नाज्यतन्त्रं पाकतन्त्रं चोच्यते कर्ममात्रमभिमंत्रणाद्यदक्षिणं न कुर्यात् पाकतन्त्रे पूर्णपात्रं माणकं सेतिकाप्रस्थद्रोणाढकादि । पूर्णपात्रं यजमान-शक्त्यपेक्षं शक्त्या वा दक्षिणां दद्यान्नातिशक्तिर्विधीयते इत्युक्तं नवमे । आज्यतन्त्रे धेनुः. — sū. 26 fg. Keç. introduces the passage with तथा च ब्राह्मणं. — sū. 30. आज्यतन्त्रे पाकतन्त्रे दर्शपूर्णमासधर्मा भवन्ति पूर्वतन्त्रं च उत्तरतन्त्रं च सर्वेषु पाकतन्त्रेषु सर्वमाथर्वणं कर्म पाकयज्ञशब्देनोच्यते. — sū. 31 (note 2). अथापि गोपथब्राह्मणपठितौ श्लोकौ भवतः. — sū. 34 (note 6). Keç. also reads देवतेति. — sū. 37. त्वमग्ने व्रतपा असि तृचं सूक्तं कामस्तदग्र इति पंचर्चं सूक्तं एते चारणवैद्यानां पद्यन्ते तस्मिन्नेव तन्त्रे आज्यं जुहोति शान्तसमिधो वा आदधाति सूक्तयोर्विकल्पः। दर्शपूर्णमासव्यतिक्रमे प्रायश्चित्तं। सर्वत्र क्रमव्यतिक्रमे . . . सर्वप्रायश्चित्ती-यान्होमाञ्जुहोति तस्मिन्नेव तन्त्रे अन्यस्मिन्तन्त्रे (!) वा तन्त्रमध्ये सर्वे होमा इति भद्रमतम्. — The sixth kaṇḍikā winds up with the following additional statement: अथ सर्वार्थाः परिभाषा विधिकर्मार्था अविधि-कर्मार्था उभयकर्मार्था उच्यन्ते । मेधाजननादि पिण्डपितृयज्ञान्तं यावद्विधिकर्माणि। मधुपर्कादि इन्द्रमहान्तं यावदविधिकर्माणि। पाकयज्ञविधिकर्म सूक्तेन विनियोगं कृत्वा पश्चादृचां विनियोगस्तान्युभयकर्माणि । त्रिविधानि कर्माणि । उपदधातीत्यनादेशे आज्यं समित् पुरोडाशः पयः उदौदनः पायसः पशुः व्रीहिः यवः तिलः धानाः करम्भः शष्कुल्यः एतानि त्रयोदश हवींषि जानीयात्। सर्वत्र इयं पैठीनसिपरिभाषा सर्वत्र हविषां विकल्पः । यत्र गणस्तत्र सर्वत्र सूक्तानां विकल्पः यत्रौषधिगणस्तत्रौषधीनां विकल्पः । हविषां त्वा जुष्टं प्रोक्षामीति सर्वद्रव्येषु प्रोक्षणं। सर्वत्र उत्पवनं हविषामिति युवा कौशिक आचार्यो मन्यते। अवशिष्टानां परिभाषाः पुनरुच्यन्ते सर्वकर्मार्थाः । आज्यतन्त्रादिवैदिकेषु कर्मसु सर्वत्र वृद्धिश्राद्धम् (cf. J. A. O. S. vol. xi. p. 376, line 11) । यत्र उदकेन प्रयोजनं तत्र सर्वत्र शान्त्युदकं कुर्यात् चतुर्भिर्गणैरेकेन वा गणेन । सूक्तादिग्रहणे सूक्तं जानीयात् । सर्वत्र स्रुवहोमे नित्यं तन्त्रं हस्तहोमे विकल्पेन तन्त्रं। आज्यतन्त्रे सर्वत्र धेनुर्दक्षिणा हविरुच्छिष्टं च अधिकरणं च — Then follows an index to the ājyatantram, as follows: आज्यतन्त्रमुच्यते अव्यचसश्च (Cod. अव्यसश्च; xix. 68. 1) बर्हिर्लवनं वेदिः उत्तरवेदिः अग्निप्रणयनं अग्निप्रतिष्ठापनं व्रतग्रहणं पवित्रकरणं पवित्रेणेध्मप्रोक्षणं इध्मोपसमाधानं बर्हिःप्रोक्षणं ब्रह्मासनं ब्रह्मस्थापनं स्तरणं स्तीर्णप्रोक्षणं आत्मासनं उदपात्रस्थापनं आज्यसंस्कारः स्रुवग्रहणं ग्रहग्रहणं पुरस्ताद्धोमाः

आज्यभागौ अभ्यातानान्तं पूर्वतन्त्रं । अथ उत्तरतन्त्रमुच्यते अभ्यातानादि-पार्वणहोमः समृद्धिहोमाः स्विष्टकृद्धोमः सर्वप्रायश्चित्तीयहोमाः स्कन्नहोमः पुनर्मैत्विन्द्रियहोमः स्कन्नास्मृतिहोमौ संस्थितहोमाः चतुर्गृहीतहोमः बर्हिर्होमः संस्रावहोमः विष्णुक्रमाः व्रतविसर्जनं दक्षिणादानं ब्रह्मोत्थापनं यस्मात्कोशादित्येतद् (xix. 72. 1) उत्तरतन्त्रं । उत्तरतन्त्रं समाप्तं. —

## Kandikā 7.

Introductory: परिभाषाव्याख्यानं क्रियते. — sū. 9. यथा पिञ्जूलीभिराज्ञावयति । घटं वा कांस्यपात्रं वा. — sū. 11. दूरादेशाद्वृत्तसंभारा आहर्तव्याः. — sū. 13. नित्यनैमित्तिककाम्यानां कर्मणां प्रयोगः। अरण्यं शान्तिकल्पे उक्तं। यत्र ग्रामशब्दो न श्रूयते तत्रारण्या(!). — sū. 14 (note 1). Keç. also reads °पित्रमाणा. — sū. 14. . . सर्वहोमकर्म समाप्यते ततो ऽवभृथं कुर्यात् । सर्वत्र पुंसवनादिषु संस्कारेषु गृह्ये प्रयोगः नावभृथ इति रुद्रभाष्यमतं. — sū. 15. आश्वादिषु सर्वत्र संपाताभिमंत्रणं भवति. — sū. 16. ..सर्वे पदार्था अभिमंत्र्य कर्तव्याः. — sū. 18. तं पुरुषं अग्रे कृत्वा गृहे प्रविश्य ततो मन्थादनौ प्रयच्छति (Kāuç. 7. 7)। यथा उतामृतासुः शिवास्त इत्यभ्याख्याताय प्रयच्छति (Kāuç. 46. 1) मंत्रेण. — sū. 19. यत्र वासितं बध्नाति तत्र सर्वत्र त्रयोदश्यादि भवति। यथा युग्मकृष्णलं वासितं बध्नाति (Kāuç. 11. 19; 52. 20). — sū. 20. मणिं बद्ध्वा तद्दधिमधु आशयति. — sū. 21. अन्वारब्धे यजमाने च कर्तव्याः। अभिमंत्रणं। यजमान उत्तरतो भूत्वा दर्भैरन्वारभते. — sū. 24. समर्थवृषभचर्म. — sū. 26. यत्र आस्रवनं अवसेचनं च तत्र आचमनं च भवति. — sū. 28. समित्पुरोडाशचरुव्रीहियवतिलादीन्यभ्याधियादीनि(!) यजमानं धूमं भक्षयति. — sū. 29. कर्मसमाप्तौ शुचिना कर्मप्रयोगः नित्यनैमित्तिककाम्यानि कर्माणि स्नानं कृत्वा प्रयुञ्जीत. —

## Kandikā 8.

sū. 1. सर्वकर्मार्था परिभाषा । अथ निशाकर्मपरिभाषा उच्यन्ते । ...येषु निशाकर्मसु तंत्रं तेषु अयं धर्मः । केचित्स्नातो ऽहतवसनः प्रयुंक्ते इति सर्वार्था परिभाषा मन्यन्ते. — sū. 2. अथ स्वस्त्ययनपरिभाषा उच्यन्ते। स्वस्त्ययनेषु चेष्यानां दिक्षान्बलीन्हरति प्रतिदिशमुपतिष्ठते। ये ऽस्यां स्थेति सूक्तेन (iii. 26) प्रतिदिशं प्रत्यृचं बलिहरणं करोति । प्राची दिगिति (iii. 27) प्रतिदिशमुपतिष्ठते। यथा उत्तमेन सारूपवत्सस्य रुद्राय

विर्जुहोति (Kāuç. 50. 14) तत्र हविरुच्छिष्टेन बलिहरणं कुर्यात्। समाप्ता स्वस्त्ययनपरिभाषा. — sū. 5. पुनः सर्वार्था परिभाषा उच्यन्ते। सर्वत्राधिकरणं कर्तुर्दक्षिणा। हविरुच्छिष्टं आज्यधानी उदूपात्रं चर्म मण्डपदर्भसमिधः शान्त्युदकभाजनं स्रुक्स्रुवादीनि देयानि। ...नित्येषु नाधिकरणमस्ति परद्रव्येषु नाधिकरणमस्ति यथा नापितस्य क्षुरं (cf. Kāuç. 51. 1fg.) — sū. 6. प्रोक्षणाचमनपर्युक्षणादि त्रिः कर्तव्यं. — sū. 8. सर्वत्र शान्तिकेषु शान्तं संभारं दर्भसमिदादि। अभिचारे रौद्रं आङ्गिरसं संभारं; cf. Kāuç. 47. 2. — sū. 9. स्रुक्स्रुवसमिधः काष्ठादि मणिद्रव्यकाष्ठाः कर्तव्यानि(!)। प्रतीकं च द्रव्यं च। यथा कथं मह इति मादानकभृत क्षीरौदनमश्नाति।... चमसे सरूपवत्साया दुग्धे (Kāuç. 12. 1 and 2) चमसोऽपि मादानक एव। कथं मह इति उत्तरमपि अनेन सूक्तेन कर्म कुर्यात्. — sū. 10. विषये (!) यथान्तरं। मंत्रद्रव्यसंशये संनिधानं गृहीतव्यं (!) यथा लोमानि हस्तिरोमाणि यथा विद्मा शरस्येति प्रमेहणं वध्नाति (Kāuç. 25. 10). — sū. 12. उलूखलमुसलकाष्ठं। अन्यार्थं इंधनार्थं काष्ठतक्षणं करोति. — sū. 15. अथ शान्तवृक्षा उच्यन्ते। ...स्रगमालवके प्रसिद्धः वंघः कन्यकुब्जे प्रसिद्धः शिरीषो भोजपुरे वाटिकायां प्रसिद्धः स्रक्त्यस्तिलकः प्रसिद्धः ...वरणो वरुणक इति आनन्दपुरे प्रसिद्धः... जङ्गिडो वाराणस्यां प्रसिद्धः कुडक (!) मालवके . . . गह्यों हिमवति . . . गलावलस्तत्रैव प्रसिद्धः . . . स्यन्दन (!) हिमवति नर्मदायां प्रसिद्धः अरणिका नर्मदातटे प्रसिद्धः अश्मयोक्त अश्मन्तको भृगुकच्छे प्रसिद्धः तुन्युस्तिन्दुकी (Cod. तुन्नु तै°) पूतुदारुर्देवदारुर्वैद्यके प्रसिद्धः। समाप्ताः शान्तवृक्षाः... — sū. 16. अथ शान्त्यौषधय(!) उच्यन्ते। चित्तिः(!) प्रसिद्धा प्रायश्चित्तिः पर्वणिपर्वणि तस्याः त्रीणि पत्राणि भवन्ति . . . शमका नंदपुरे विश्वामित्री (!for वै?) वाप्याः समीपे ऽस्ति (Cod. वाप्याः समीपो स्ति) सवंशा घर्मोलिका सायवाका (!) काकजंघासदृशा तलाशा वेतसो . . . वात्सक (!) आटरूपकः (cf. Kāuç. 39. 6, note) सीसपात्र (!for शिंशपा?) प्रसिद्धा शाल्मलिः प्रसिद्धः सिपुनाकरी (!for सिपुन अङ्कुरी?) . . . आकृतिलोष्टः चैत्रमृत्तिका वल्मीकमृत्तिका . . . एताः सर्वाः शान्ता ओषधयः शान्त्युदकादौ प्रयोक्तव्याः एतासां समुच्चयः। एतासामलाभे यवप्रतिनिधिः कार्यः इति पैठीनसिः। शान्त्यौषधिकल्पः (!) समाप्तः. — sū. 17. प्रमंदोशीरशलल्युपधानं (!) शकधूमा चरंतः (cf. text, note 9) . . . उपधानं विद्यागन्धुकं(!) — sū. 18. यत्र शकधूमः ब्राह्मणः। एता जरन्तः जीर्णा ग्राह्याः. — सीसानि तत्र एतानि सर्वाणि प्रत्येतव्यानि। . . . नदीसीसं नदीफेनं . . . — sū. 19. रसकर्मणि एते रसाः प्रत्येतव्याः समुच्चयेन. — sū. 20. Keç.

also reads °पवाकस्ति°, and glosses it by इन्द्रयवः।... प्रियङ्गुः कांगुणिका (cf. Pet. Lex. sub कङ्गु and कङ्गुनी)... — sū. 21. ग्रहणं प्रतीकग्रहणं ग्रहणमनुग्रहणं तावदनुवर्तते यावत्प्रतीकग्रहणं द्वितीयं. — sū. 22. अनुषङ्गः (Cod. °संगं) यथार्थं सर्वत्र कर्तव्यः। यथा विद्मा शरस्य पितरं पर्जन्यं शतवृष्ण्यमिति (i. 3. 1; cf. Kāuç. 25. 10) वैदिकं। लौकिकमिति भवति कृतयामं कंकतमवसृजामीति (! Kāuç. 76. 5, 6)। अनुषंगः पुनरुक्तमित्यर्थः. — sū. 24 fg. Keç. introduces with अथ चतुर्गणीमहाशान्त्या गणाः पठ्यन्ते ... — sū. 25. ... अरायक्षयणमिति तिस्रः (ii. 18. 3-5) ... —

## Kaṇḍikā 9.

sū. 1. ... ये अग्नय इति सप्त ब्रह्म जज्ञानमित्येका (!) अपैमेन्व (iv. 23. 1) इति सप्त मृगारसूक्तानि ग्रहीतव्यानि; cf. text p. 28, note 3. — sū. 2. Keç. presents the matter of this Sūtra as follows: प्रथमे द्वे उत्तमं वर्जयित्वा शं च नो मयश्च न इत्येका पुनर्मैत्विन्द्रियमित्येका शिवा न इत्येका शं नो वातो वातु इत्येका शेषाणि सूक्तानि। अनेन शान्तिगणेन शान्त्युदकं कुर्यात्. — sū. 3. यत्र शान्त्युदकं क्रियते तत्र पृथिव्यै श्रोत्रायेति त्रिभिर्ऋग्भिः शान्त्युदकं शान्त्युदकमध्ये प्रक्षिपेत्। अनेनैव कारयिता प्रोक्षणाचमनादीनि प्रत्यृचं करोति. — sū. 4. एष शंतातीयो गणः। यत्र शंतातीयेन प्रयोजनं तत्रायं सर्वत्र प्रयोक्तव्य इति। यथा शंतातीयेन तिलाञ्जुहोति. — sū. 6. शान्तियुक्तानि। इह शान्त्युदके सर्वेषां सूक्तानां समुच्चयः अन्यच्च सर्वत्र यथोक्तेन न्यायेन विकल्पः न सूक्तविकल्पः. — sū. 7. उभयतः शान्तिगणस्य प्रारम्भे समाप्तौ च... — sū. 8 fg. Keç. introduces with अथ शान्त्युदकविधानमुच्यते. — sū. 9 (note 6). अवकरं विसर्जयति. — sū. 9 (note 3, page 30) अनुज्ञातः शान्त्युदकं करोति शं नो देवीत्यृचा सावित्री च अस्वयो यन्ति गणेन च शान्त्युदकं करोति लघुगणेन बृहद्गणेन वा चतुर्गणैर्वा (cf. p. 28, note 7) सावित्री शं नो देवी। ततः पृथिव्यै श्रोत्रायेति त्रिः प्रत्यासिंचति शान्त्युदके शान्त्युदकं प्रक्षिपति. — sū. 10. एते चतुर्गणेन बृहद्गणेनैकेन वा शान्त्युदकं कुर्वन्ति. — Keç. finishes the adhyāya as follows: शान्त्युदककर्मपरिभाषा समाप्ता। नवमी कण्डिका। तत्र भद्रश्लोकः।

प्रमाणं पार्वणे चैव प्रकृतित्वात्परोक्षिते।
परिभाषा च सर्वार्थां प्रथमे ऽध्याये संहिताविधौ॥

इति प्रथमो ऽध्यायः. —

## Adhyāya ii.

### Kaṇḍikā 10.

sū. 2 (note 2). . . . सारिकाजिह्वां बध्नाति . . . सारिका कंटारिका प्रसिद्धा. — sū. 2 (note 3). कृशो भारद्वाजः. — sū. 4. . . कर्कन्धू (!) वृहद्बदरी . . . — sū. 6. ये त्रिषप्ता (i. 1. 1) इति सूक्तेन चीरौदनं संपात्याभिमंत्र्य भक्षयति . . . पुरोडाशं भक्षयति . . . रसान्भक्षयति । रसप्राशनं सर्वत्र त्वे क्रतुमित्यृचा (v. 2. 3) कर्तव्यं. Cf. Kāuç. 21. 21. — sū. 7. ये त्रिषप्ता इति (i. 1. 1) सूक्तेन उपनयनानन्तरं द्वादशरात्रम् . . . वज्रभेद्यमेकत्र कृत्वाभिमंत्र्य उपाध्यायाय ददाति. — sū. 8. सुप्तस्योपाध्यायस्य कर्णमनुमन्त्रयते ब्रह्मचारी. — sū. 9. यदायदा उपाध्यायगृहं याति तदातदा जपति ब्रह्मचारी. — sū. 15. . . उपाध्यायाय. — sū. 16. शुक्लपुष्पहरितपुष्पे इति शंखपुष्पिका अन्धपुष्पिका प्रसिद्धे. — sū. 17. सम्यक् वर्चस्कामो मेधाकामश्च प्रथमप्रवदस्य . . . — sū. 19. अहं रुद्रेभिरिति शुक्लपुष्पेत्यादि पञ्च कर्माणि आयुष्कामो ऽपि करोति वार्षशतिकं कर्मेति वचनात्. — sū. 23. . . . आदित्यमुपतिष्ठते मेधाकामः. — sū. 24. . . . निद्रां त्यक्त्वा . . . मुखप्रचालनं वर्चस्कामो ऽपि करोति। . . . मेधाकर्माणि समाप्तानि. —

### Kaṇḍikā 11.

sū. 1. पौर्णमास्यां निर्ऋतिकर्म (Kāuç. 18. 1 fg.) कृत्वा सकृच्छ्रो भूते सांपदं कुरुते. — sū. 3. ब्रह्मचारिगृहात् . . . तृणान्यादधाति. — sū. 4 (note 2). आरण्यपिपीलिकाछिद्रे. — sū. 5. संगृह्य स्थाल्यां कृत्वा ग्रामे आगत्य . . . स्थाल्याः सकृज्जुहोति. — sū. 6 (end). . . . समाप्तानि ब्रह्मचारिसांपदानि . . . शिष्यसंपत्तिर्भवति. — sū. 7. पूर्वेद्युर्निर्ऋतिकर्म कृत्वा (Kāuç. 18. 1 fg.) ग्रामसांपदानामधिकारः. — sū. 10 (end). समाप्तानि ग्रामसांपदानि . . . ग्रामकामो यदा भवति तदा ग्रामसांपदं कुरुते. — sūs. 15. 16. ये त्रिषप्ता इति सूक्तेन पृश्निमन्थो जिह्वाया उत्साद्यमचो (!) परिस्तरणमस्त्विहं (!) हृदयं दूरिश (!) उपनह्य etc. — sū. 18. पृश्निमन्थं मैश्रधान्यं च दधिमधुमिश्रं कृत्वा . . . अश्नाति। . . . समाप्तः पृश्निमन्थः. — sū. 19. युग्मकृष्णलं सुवर्णमणिं. — sū. 20. साहृपवत्से ओदने (Cod. तुंदने) पुरुषाकृतिमालिख्य . . . —

### Kandikā 12.

sū. 1 (note 9). ऋादानककाष्ठमृतम्. — sū. 4. Keç. gives the मन्थान्तानि (sc. कर्माणि) in full, repeating the proceedings described in Kāuç 10.4-6; 11.12-18. — sū. 5. ..सांमनस्याधिकार आ वर्चस्येभ्यः कर्मभ्यो यावत्...जातपुत्रस्य सांमनस्यं क्रियते। यावज्जीवं संजातानां सगोत्राणां सांमनस्यं भवति. — sū. 6. उदकुम्भं संपातवन्तं कृत्वा ग्रामपार्श्वे भ्रामयित्वा... — sū. 8. Keç. also reads शुक्त्यानि several times, and glosses: आम्लेन रसेन सिक्तानि मांसानि. — sū. 9. सहृदयमिति etc. (see sū. 5) भक्तं संपात्याभिमंत्र्याशयति ..सुरां प्रयच्छति पुरुषेभ्यः त्रैवर्णिकेभ्यः . . . प्रपोदकं प्रयच्छति . . . । सांमनस्यानि समाप्तानि. — sū. 10. अथ वर्चस्यविधिं वक्ष्यामः । ये त्रिषप्ता इति सूक्तेन औदुम्बरसमिध आदधाति। सर्वत्र वर्चस्कामो ऽनुवर्तते आ राजकर्मभ्यो यावत् (Kāuç. 14. 1). — sū. 12. अथ कुमारीवर्चस्यमुच्यते . . . । कुमारी रूपवती वर्चस्विनो भर्तृगृहे प्रधाना भवति. — sū. 16 (note 16). वैश्यशूद्रानुलोमजाः. —

### Kandikā 13

sūs. 1. 2. हस्तिवर्चसमिति हस्तिदन्तं दृष्ट्वा उपतिष्ठते। . . . हस्तिदन्तमणिं बध्नाति. — sū. 3. हस्तिलोमानि लाक्षाहिरण्येन वेष्टयित्वा... बध्नाति. — sū. 4 (note 6). The emendation of the word कृष्ण in the text to वृष्णि, as suggested in the note, is rendered certain by Keçava's gloss: ...सूक्ताभ्यां मेषनाभिरोमसमणिं ... लाक्षाहिरण्येन वेष्टयित्वा बध्नाति. — sū. 6. . . . स्नातकादिसप्तमर्माणि स्थालीपाकेन दत्त्वा . . . — sū. 7. . . . इदं कर्म क्षत्रियादीनां न ब्राह्मणस्य . . . — sū. 11. चन्दनादिगन्धानासाद्य तस्मिन्मध्ये आकाशोदकं प्रक्षिप्य चतुरङ्गुलेन दर्भतृणेनालोड्य. — sū. 12. . . . यस्ते गन्ध इति त्रिभिः...राज्ञां समालभते. —

### Kandikā 14.

Keç. bas the following introduction: अथ राजकर्माण्युच्यन्ते। सांग्रामिकाणां कर्मणां तन्त्रं वक्ष्यामः। अश्वत्थस्य बधकस्य वा अरण्योरग्निं (!) मन्थति इन्द्रो मन्थत्वित्यृचा (viii. 8. 1) मथ्यमानमनुमन्त्रयते। पूतिरज्जुरित्यर्धर्चेनाग्निपतनस्थाने (viii. 8. 2ª) रज्जुं निदधाति। धूमं परादृश्येत्यर्धर्चेन (viii. 8. 2ᶜ in a modified form) धूममनुमंत्रयते। अग्निं परादृश्येत्यर्धर्चेन

(viii. 8. 2ᶜ in a modified form) जातमग्निमनुसंचयते । एष सेनाग्निः। अव्यचसश्च (Cod. अव्यसश्च; xix. 68. 1) वर्हिर्लवनादि समानं सेनाग्निप्रणयनं ग्रहणं पंचगृहीतमाज्यं। अभ्यातानान्तं कृत्वा लोहिताश्वत्थस्य शाखां रोपयति उत्तरतः । ततः प्रधानकर्म कुर्यात् । तत उत्तरतंत्रे विशेषः। संततिहोमांतं कृत्वा इमे जयंतु स्वाहेभ्य (cf. Kāuç. 16. 18) इत्येतेन मंत्रेणाज्यं जुहोति। ततो वधककाष्ठप्रज्वालितेऽग्नौ वामेन हस्तेन इङ्गिडं जुहोति (cf. Kāuç. 47. 3) पराभिजयन्तां (!) दुराहामीभ्यः (cf. Kāuç. 16. 19) अग्नौ स्वाहेति। ततः शाखायां दक्षिणतः प्रक्षिपति नीललोहितेनामूनिति मंत्रेण स्विष्टकृदाद्युत्तरतन्त्रं । एतत्सांग्रामिकं तन्त्रं । सांग्रामिकेषु सर्वत्र उच्चैर्मन्त्राणां प्रयोगः तन्त्रमध्ये ये प्रधानमन्त्रास्ते उच्चैर्भवन्ति. — sū. 1. शत्रोर्हस्तित्रासनानां कर्मणां विधिं वक्ष्यामः. — sū. 2. तं हस्ति(नं) संप्रति प्रतिमुखं रथमावर्तयति. — sū. 6. ये त्रिषप्ता इति सूक्तेन वेणुकामभिमंत्र्य यत्र हस्तिनस्तत्राभिमुखो याति। समाप्तानि हस्तित्रासनानि. — sū. 7. . . . जयकर्माण्यनुवर्तन्ते आ राष्ट्रप्रवेशकर्मभ्यो यावत्. — sū. 8. इध्मसमाधानस्थाने धनुरिध्म(!) आदधाति... धनुःसमिध आदधाति. — sū. 9. शरेध्मोपसमाधानं . . . शरसमिधः प्रादेशमात्रीरादधाति. — sū. 11. . . . विजयकर्माणि सांग्रामिकाणि समाप्तानि . . . संग्रामे अयुध्यमाने जयो भवति । एभिः कर्मभिः दृष्टमात्रतः शत्रवः पलायन्ते. — sū. 12. इषुनिवारणानि कर्माण्युच्यन्ते . . . अनेन कर्मणा पुरुषशरीरे इषवो न पतन्ति पार्श्वतो गच्छन्ति. — sū. 14. सर्वशस्त्रनिवारणानां कर्मणां विधिं वक्ष्यामः. — sū. 15. . . . जुहोति सेनाग्नौ. — sū. 16. अरे ऽसाविति सूक्तेन शत्रुं दृष्ट्वा जपति. — sū. 17. अथ मोहनकर्मणां विधिं वक्ष्यामः . . . परसेनामोहनानि. — sū. 18. ओदनेन फलीकरणं पिण्डीकृत्य . . . — sū. 19. ओदनेन सह कणिकां पिण्डीकृत्य . . . — sū. 20. . . . शर्कराः सूर्ये कृत्वा निष्पुनाति. — sū. 21. अप्वादेवताचरुतंत्रं (Cod. अद्या°, here, and everywhere else throughout this passage) आज्यभागान्तं कृत्वाग्निर्नः शत्रूनग्निर्नो दूत इति सूक्ताभ्यां (cf. sū. 17) चरुं जुहुयात् । निर्वापे प्रोक्षणे वर्हिर्होमे विशेषः। अप्वायै (त्वा) जुष्टं निर्वपामि। अप्वायै त्वा जुष्टं प्रोक्षामि अप्वां गच्छतु हविः. — sūs. 22. 23. उद्वेगकरकर्म उच्यते . . . अजां सितपदां (!) शत्रुसेनां प्रति विसर्जयति । श्वेतेन पादेन अजा वा अविर्वा एणी वा . . . । इत्युद्वेगकरं समाप्तं . . . समाप्तानि परस्परोद्वेगकरणानि मोहनस्तम्भनमित्यर्थः. — sū. 24. पुनर्बंधकर्मोच्यते. — sū. 25. स्वसेनारक्षणार्थं कर्मोच्यते . . . स्वसेनां प्रतिदिशमुपतिष्ठते. — sū. 26. अथ स्वसेनाया उत्साहकरणं वक्ष्यामः. —

sū. 27. सेनयोर्मध्ये स्थितो जपति निरीक्षमाणः. — sū. 28. परसेनायां प्रक्षिपति . . . उच्छ्वसन् . . . क्रुद्धः. — sū. 30. अथ जयपराजयविज्ञानमुच्यते। . . . शरतृणानि . . . आङ्गिरसेनादीपयति . . . आङ्गिरसो ऽग्निः चाण्डालाग्निः सूतिकाग्निः. — sū. 31. सेनयोर्मध्ये कृत्वा यान् धूमो ऽवतनोति ते जयन्ति यत्र धूमो गच्छति तत्र न जयः. —

## Kandikā 15.

sū. 1. अथ सांग्रामिकं विधिं वक्ष्यामः जयकर्माण्युच्यन्ते। . . . सूक्ताभ्यामाश्वत्थ्यां पात्र्यां त्रिवृति गोमयपरिचये ऽग्निं प्रज्वाल्य हस्तिपृष्ठे शत्रुमभिमुखो गच्छन्नाज्यं जुहोति . . . पुरुषशिरसि . . . तत्पात्रं प्रक्षिपति भूम्यां. — sū. 4. युद्धे मृतस्य पुरुषस्येध्ममुपसमाधाय उपरि चक्रं धारयित्वा दीर्घदण्डेन स्रुवेण . . . — sū. 5. . . युद्धं योजयेत्. — sū. 7. वैश्वाय संग्रामविधिं वक्ष्यामः. — sū. 8. . . . सेनापतिजयकर्म . . . दण्डनायकजयकर्म. — sū. 9. स्वसेनाजयपराजयपुरुषवधशङ्कायां . . . विज्ञानमुच्यते। . . . उदपात्रमभिमंत्र्य ततो द्वौ द्वौ योधारौ अवेक्षयेद्राजा. — sū. 10. यं न पश्येत्त न युध्येत योधयेत्. — sū. 11. अथ नवरथे घटिते संस्कार उच्यते . . . — sū. 12. अथारोग्यविधानमुच्यते ब्रह्म जज्ञानमनाप्नोति (v. 6) . . . — sū. 15. अथ सांग्रामिकविधानमुच्यते . . . एका आत्मसेना रज्जुर्द्वितीया मध्ये मृत्युः तृतीया रज्जुः परसेना। एवं संकल्पः। तत अङ्गारेषु निधाय दृश्यते यस्य उपरि मृत्युर्गच्छति तस्य सेनाया जयो भवति. — sū. 18. . . . आरोग्यविज्ञानकर्म जयविजयपराजयविज्ञानकर्म। एकरज्जुमुख्यमध्यमाधरविज्ञानकर्म। एतानि त्रीणि कर्माणि भवन्ति। . . . इषीका शरमया वा वीरिणमया वा कर्तव्या. —

## Kandikā 16.

sū. 1. अथ त्रासनं परसेनाविद्वेषणमुच्यते . . . — sū. 3. सोमाङ्कुरमणिं . . . बध्नाति. — sū. 4. राजा त्रिः कटकं भ्रामयति. — sū. 6. . . . जयकामः इदं कर्म कुर्यात्। जयकर्माणि अनुवर्तन्ते अस्मिन्वस्थिति राष्ट्रावगमनं यावत् (sū. 27). — sū. 7 fg. अभयकर्म उच्यते . . . — sū. 8. अभयं द्यावापृथिवी इति सूक्तेन (vi. 40) सप्तकृत्वपीन्यजते प्रतिदिशं सेनायाः . . . प्रतिदिशं सेनाया उपतिष्ठते वा। श्येनो ऽसि गायत्रेति सूक्तेन (vi. 48) सप्तकृत्वपीन्यजते उपतिष्ठते वा सेनायाः प्रतिदिशं . . . — sū. 9 fg. उक्तमग्निमन्थनमादौ इन्द्रो मन्थत्वित्यादि . . . अग्निं मन्थति. — sū. 14. अथ सपत्नक्षयणीकर्म उच्यते। अरण्ये . . न ग्राममध्ये कुर्यात्। . . .

(वधकः) कृमिमालकः . . . (आह्नः) तिर्णिसमिधः. — sū. 16 (note 15). . . . भांगानि ज्वालानि (!) . . . सेनाक्रमेषु वपति. — sū. 17. . . . सेनाक्रमेषु वपति. — sū. 18 (note 2) स्वाहेभ्य इत्यमित्रेभ्यः . . . — sū. 21. आवत्सानि (!) जयकर्माण्युच्यन्ते। ये वाहव इत्यनुवाकं युद्धकाले जपति कर्ता. — sū. 23. . . . सर्वत्र पाशेषु आश्वत्थेषु कूटेषु भाङ्गेषु जालेषु वाधकदण्डेषु वज्ररूपेषु पात्रेषु चेङ्गिडालङ्करणे कुद्दानुमंत्रणं कुर्यात् . . . — sū. 24. त्रिपन्धीनि लोहमयानि . . . वज्ररूपाणि लोहमयानि अर्बुदिरूपाणि पृषदाज्येन संपात्याभिमंत्र्य निवपति. — sū. 25. ये वाहव (ix. 9. 1) इत्यनुवाकेन शितिपदीं आज्यं पृषदाज्येन संपात्याभिमंत्र्य राज्ञो (Cod. राज्ञा or राजा?) दण्डे वध्नाति. — sū. 26. द्वितीयां शितिपदीं . . . शत्रुसेनां प्रक्षिपति . . . । शितिपद्योर्द्वयोररण्ये कर्म. — sū. 27. अथावश्यं राष्ट्रप्रवेशककर्मविधिं वक्ष्यामः । स्वराष्ट्रे (!) यो निष्क्रान्तः शत्रुणा पुनः प्रवेशमिच्छति तस्येदं कर्म. — sū. 28. . . . आनुशुष्का (!) लूना व्रीहयः पुनरुत्थिताः छिन्नानि कायानि (! for सस्यानि?) पुनरुत्थितानि . . . सर्वस्यामर्दितायां भूमौ पादानिष्क्रान्तो (!) राजा तदा इदं करोति. — sū. 30. . . . सेनाकारं (!) पुरोडाशं . . . — sū. 31. ततो लोष्टेन पूरयेत् . . . क्षीरौदनं स्थालीपाकं राजानमाशयति. —

## Kaṇḍikā 17.

sū. 1. अथ लघु अभिषेककर्मोच्यते (cf. the term महाभिषेक below, in connection with sūtras 11 fg.) . . . माण्डलिकस्य सामन्तस्य युवराजस्य सेनापतेरन्यस्य कस्य चिदभिषेकः . . . । शान्त्युदकं करोति महानद्या उदकेन च पुष्कराणामुदकं देववृष्ट्युदकं दिव्यमुदकं च । उदकानां विकल्पः समुच्चयो वा. — sū. 2 (note 5). . . . दक्षिणतो वेद्याः . . . — sū. 3 (note 7). खट्वायां आर्षभं चर्म आस्तीर्य तत्र राजानमारोहयति. — sū. 4. उदपात्रमुभावप्यासिंचति (!). — sū. 6 (note 11). . . . राजा ब्रूते. — sū. 7 (note 13). ब्रह्मा ब्रूयात् . . . — sū. 10. Keç. adds the following statement: अभिषेकादनन्तरं घृतावेक्षणमारात्रिकं (cf. Ath. Pariç. 6 and 7) राजकर्माणि पिष्टरात्र्यादीनि कर्माणि (cf. Ath. Pariç. 5) प्रत्यहं कर्तव्यानि . . . — sū. 11. महाभिषेकविधिं वक्ष्यामः स सार्वभौमस्य भवति. — sū. 16. राजकीयो महाशूद्रः प्रक्षालनं ददाति. — sū. 17. राजा द्यूतक्रीडां करोति. — sū. 18. . . . वैश्यः राजानमुपतिष्ठते उत्सृजायुष्मन्निति मंत्रेण. — sū. 19. ततो

राजा ब्रूते ... — sū. 21. राजानमाश्रयति. — sū. 25. ...राजानमाश्रयति. — sū. 26. स्त्रीणां गृहे याति. — sū. 27. तत्र मधुपर्को देयः। महाभिषेकः समाप्तः। अतो भूप्रभृतिराजकर्माधिकारः। घृतावेक्षणं (Ath. Pariç. 6) पुरोहितकर्म (Ath. Pariç. 3) आरात्रिकं (Ath. Pariç. 7) नक्षत्रपूजा ग्रहपूजादिकं कर्तव्यं. — sū. 30. . . . मूद्रेण आहुता समिध आदधाति. — sū. 31. अथ वाचयेदिति विकल्पं मन्यन्ते आचार्याः. — Keç. adds here: समाप्तानि राजकर्माणि। तत्र श्लोकः। मेधासांपदकर्माणि सांमनस्यं च वर्चसांपदं क्रमाच्च राजकर्माणि द्वितीये ऽध्याये महर्षिणा. —

## Adhyāya iii.

### Kaṇḍikā 18.

sū. 1. अथ निर्ऋतिकर्मणां विधिं वक्ष्यामः। आ पुष्टिकर्मभ्यो यावत् (sū. 19) . . . — sū. 11. प्रदक्षिणं भूत्वा निर्ऋतिदिशमभिमुखो भूत्वा ये चिपप्ता इति सूक्तेनाज्यं सकृज्जुहोति. — sū. 12. अग्नौ छत्रोपानहौ जुहोति. — sū. 14. . . . धानाः शर्करामिश्रान्सकृज्जुहोति (!). — sū. 15. सह पिटकेन तृतीयामाहुतिं जुहोति. — sū. 16. काकजङ्घायां लोहकंटकं बद्धा कंटके पुरोडाशं बध्नाति तथा निर्ऋत्यभिमुखो भूत्वा प्र पतेत इत्यृचा काकं विसर्जयति. — sū. 17. नीलं वस्त्रमधः परिधत्ते रक्तवर्णमुपरि आच्छाद्य शुक्लवस्त्रोष्णीषं कृत्वा या मा लक्ष्मीरित्यृचा लोहखण्डेन (Cod. ॰षंडेन) सह उष्णीषमुदके प्रक्षिपति. — sū. 18. एकशतं लक्ष्म(!) इत्यृचा रक्तवस्त्रं लोहखण्डेन सहाप्सु क्षिपति। एता एना इत्यृचा नीलं वासो लोहखण्डेन सहाप्सु क्षिपति... गृहे आगच्छति। ततः कर्माणि कुर्यात्पौष्टिकानि सांपदानि च। समाप्तानि निर्ऋतिकर्माणि. — sū. 19. पूर्वस्य चित्राकर्मादीनि पौष्टिकानि तान्युच्यन्त आ भैषज्येभ्यः कर्मभ्यो यावत् (Kāuç. 25. 1 fg.)। ...एतत्कर्म चैत्र्यां पौर्णमास्यां कुर्यात्। अथवा चित्रानक्षत्रे कुर्यात्। नित्यं चैत्रीकर्म. — sū. 22. ... परशुवन्मुखेनाघ्राति न हस्तेन. — sū. 26. Keç. describes the मन्त्यान्तानि कर्माणि by the rites detailed at 11. 11 fg. — sū. 27. अध्वानं गच्छता पुष्टिकर्माण्युच्यन्ते. — sūs. 28. 29. यदा गच्छति तदा एतत्कर्म। यदा ग्रामं गच्छति तदा एतत्कर्म कुर्यात्। समाप्तं प्रस्थानकर्म. — sūs. 30. 31. यथार्थं याचते तदा द्रव्यकाम एतत्कर्म कुर्यात्। अथवा निष्कामो ऽपि करोति. — sūs. 32-34. अथ समुद्रकर्म सर्वफलकर्म व्याख्यास्यामः। अभ्यातानान्तं कृत्वा ततश्चत्वारः पूलकाः पलाशसमिन्धनं चत्वारो दर्भपूलका व्यतिषक्तेन जुहोति। एवं

समिद्भारकं द्वितीयं तस्योपरि दर्भभारकं। पुनरपि तथैव च अष्टौ उपर्युपरि कृत्वा ततो ब्रह्मजज्ञानेन सहस्रधारेणाज्यं जुहोति. — sūs. 37. 38. मान्त्रिकस्याग्नेः प्रणयनं। अथवा सत्त्रस्थाने (Cod. शत्रु°) एतत्कर्म करोति धनधान्यपुत्रलक्ष्मीयशोमेधाधर्मकामः। आयुर्बलप्रजासंपद्ग्रामकूपादि . . . संपद्यते समुद्र इत्याचक्षते कर्मेति वचनात्. —

## Kaṇḍikā 19.

sūs. 1. 2. अथ गवां रोगेषु गवां पुष्टिप्रजननेषु शान्तिरुच्यते। . . . बहुदुग्धा गावो भवन्ति ज्वरगण्डमालादिरोगे एतत्कर्म गर्भग्रहणार्थमेतत्कर्म भवति. — sū. 3. तडागमवरुध्य ततो गाः पाययति। समाप्तानि गवां पुष्टिकर्माणि. — sū. 4. सर्वार्थानि पुष्टिकर्माण्युच्यन्ते। द्वाभ्यां महानदीभ्यामुदकमाहृत्य सर्वत उपसिच्य. — sū. 7. अथ लक्ष्मीकर्म व्याख्यास्यामः। . . . यस्य गृहे लक्ष्मी नास्ति तस्य गृहात् . . . — sū. 8. श्रीमतो गृहाद्गोमयमाहार्य . . . — sū. 9. अथ समुद्रे इदं कर्म क्रियते पुष्टिकर्म। अलक्ष्मीविनाशकर्माण्युच्यन्ते। शापिटमालिप्याप्सु निविध्य तत्राग्निं प्रणीय। शिरभकेति सूक्तेन भक्तं संपात्याभिमंत्र्याश्नाति . . . पुष्ट्यर्थी. — sū. 10 (note 14). कंडितयवानां . . . — sū. 14. गोष्ठकर्मणां विधिं वक्ष्यामः. — sū. 18. गोवाटे पांसुकूटं कृत्वा अर्धं दक्षिणेन निक्षिपति. — sū. 20. चतुर्थे उत्खाय . . . अश्नाति. — sūs. 22. 23. अथ सर्वकाममणिशान्तिरुच्यते (Cod. सर्वकामा°) . . . पालाशमणिं त्रिवासितं कृत्वा संपात्याभिमंत्र्य बध्नाति त्रयोदश्यादयस्तिस्रो दधिमधुनि वासयित्वा बध्नाति परिभाषावचनात् (Kauç. 7. 19)। पलाशादिचतुर्षु मणिषु संबध्नीते पुष्टिकामः। . . . तिलकमणिं . . . वरणमणिं . . . खदिरपलाशमणिं . . . बध्नाति. — sū. 26. . . . तलाशमणिं बध्नाति. — sū. 27. . . . समाप्ता मणिबन्धनशान्तिः. — sū. 28. अथ अष्टकाकर्म . . . पुष्टिकामो वा नित्यं वा . . . कुर्यात्। माघाष्टकायां पूर्वाह्णे यज्ञोपवीती शालानिवेशनं समूहयति। उपवत्स्यद्भक्तमशित्वा स्नातो ऽहतवसनः प्रयुङ्क्ते रात्रौ वशातन्त्रं पाकयज्ञविधानं धानादीनां श्रपणं कृत्वा। तत आज्यभागान्तं कृत्वा ततः पुरस्तादग्नेः प्रतीचीं गां धारयन्ति। पश्चादग्नेः प्राङ्मुख उपविश्य अन्वारभ्याय शान्त्युदकं करोति। पथमा ह व्युवास सेति सर्वेण सूक्तेन घृतं जुहोति। त्रिः सूक्तावृत्तिः। ततो मांसहोमे प्रथमा ह व्युवास सेति सर्वेण तिस्रः पश्चादाज्यतीर्जुहोति. — sū. 29. ततः प्रथमा ह व्युवास सेति सूक्तेन सर्वेण स्थालीपाकं जुहोति. Then follows a passage corresponding to Kauç. 138. 1 fg. —

## Kaṇḍikā 20.

sū. 1. कृषिनिष्पत्तिकर्म वक्ष्यामः। क्षेत्रे गत्वा ... — sū. 4. हालिको ऽन्यांश्चतुरो वृषभान्युनक्ति षड्द्रवं हलमिति वचनात्. — sū. 5. ...लोहफालमभिमंत्र्य हले प्रतिकर्षति. — sū. 7. ... अपूपानभिमंत्र्य हले फालमुखे ददाति। ततः ... कर्ता हलेन कृषति. — sū. 8 (note 9). हालिकाय. — sū. 9. तिस्रः सीताः प्राचीर्हालिकः कृषति. — sūs. 14. 15. ...उदपात्रे निदधाति। तेनोदकेन हलं सर्वमनक्ति. — sūs. 16–19. यत्र सीता संपातिता तस्मात्स्थालात् मृत्तिकां पत्नी गृह्णाति हस्तेन। अतो ऽन्यो मनुष्यः पृच्छति किमाहार्षीः। ततः पत्नी ब्रूते वित्तं भूतिमिति. — sū. 20. मृत्तिकां निदधाति पत्नी. — sū. 21. ततो लोहफालं घृतेनाभ्यज्य तत्रैव क्षेत्रे निदधाति. — sū. 22. सीताशिरःसूत्रेषु ... — sū. 23. एकैकस्याः सीताया दक्षिणे चमसे रसान्प्रक्षिप्य मध्यमेषु विरूढं निदधाति पुरोडाशमुत्तरेण निदधाति. — sū. 24. चमसोपरि दर्भाग्रान्निदधाति ततश्चमसान्पांसुना प्रच्छादयति मृत्तिकां ददाति तत्र। ततः प्रभाते अवश्यं तस्मिन् क्षेत्रे द्वितीये ऽहनि कर्षितव्यं। एतत्सर्वं एकं कर्म। कृषिभ्यः निष्पत्तिकर्म समाप्तं. — sū. 24. अथ वृषभलाभकर्म उच्यते... — sū. 25. . . आनडुहसांपदं कर्म समाप्तं. —

## Kaṇḍikā 21.

sū. 1. अथ स्फातिकरणकर्म उच्यते. — sūs. 5. 6. यदायदा भक्तं राध्यते तदातदा अभिमंत्रयते। यदा दीयते कंडेन ... निष्पवने रंधने परीचणे (? Cod. °पणे) दाने च सर्वत्राभिमंत्रणं. — sū. 7. स्थिरधान्यमचयं भवति। समाप्तानि स्फातिकरणानि पुष्टिकर्माण्येव वर्तन्ते. — sū. 8. संध्याकाले. — sū. 9. यदा प्रथमं होममिच्छति तदा इदं कर्म करोति. — sū. 11. सूर्यस्य रश्मीनन्विति तिसृभिर्द्वादशनाम्न्यां (!) बध्नाति। इह वत्सां नि बध्नीम इति पादेन वत्सां बध्नाति। अयं घास इति पादेन घासं ददाति गोभ्यो वा वत्सेभ्यश्च (!) ...। समाप्ता गोशान्तिः. — sū. 12. वस्त्रसांपदानि (Cod. वत्स°) कर्माण्युच्यन्ते. — sū. 13. ... सूत्रेण परिवेष्य घृतेनाक्ता आदधाति. — sū. 14. ... इषीकाः तिस्रो मधुना चिकसेन(!) प्रलिप्ता आदधाति. — sūs. 15. 16. ज्येष्ठेन पुत्रेण सह भागविधिं वक्ष्यामः। उत पुत्र इत्यृचा गृहकाष्ठकाद्या अभिमंत्र्य ततो गृहं कारयेत्पुष्टिकामः पुत्रो वा सांपदं करोति पिता वा करोति. — sūs. 17. ... आर्द्रपाणि (!) भूत्वा शान्तशाखया ऋचं जपित्वा पुत्र पिता पुत्रभागं प्रयच्छति. — sūs. 18. 19. प्राग्भागमपाकृत्य पुत्रस्य गृहे गोधनं

बधाति। अग्निसंमुखं कुरुते। पुत्रस्य भागं क्रियते. — sū. 20 आग्नेया ग्रमावास्या भविष्यति तस्यां... पुत्राश्च भ्रातारो ऽपि अनेन विधानेन भागं कुर्वन्ति। समाप्तं विभागकर्म. — sū. 21 - 23 ... त्वे क्रतुमित्यृचा सर्वत्र रसप्राशनं परिभाषा सर्वस्मिन्नथर्ववेदे रसकर्मसु पाकयज्ञविधानेन प्रजापतये चरुं श्रपयित्वा। सुम्व वर्ष्मन्निति ऋचा जुहोति... पुष्टिकामः। अमावास्यायामस्तमिते रात्रौ वल्मीके दर्भानास्तीर्य तत्र दीपं ददाति. —

## Kaṇḍikā 22.

sū. 1. पुनः . . . पुष्टिकर्माण्युच्यन्ते . . . — sū. 1 (note 5). Keç. also reads भ्रष्टपिष्टं(सक्तुं). — sū. 6. चैत्रकामस्य कर्म उच्यते। यत्र चैत्रं कामयते तस्मिन्चैत्रे इदं कर्म कुर्यात्. — sū. 7 . . . सप्तग्रामलाभकर्म. — sū. 10. अथ समृद्धिकर्म उच्यते. — sū. 10 (note 7). उदक्यां. — sū. 14. अथ समुद्रकर्म उच्यते। शत्रुदेशे गत्वा गार्हपत्यदक्षिणाग्न्याहवनीयेषु कर्म कुर्यात्। ततो गार्हपत्ये अभ्यातानान्तं कृत्वा ममाग्ने वर्च इति साम्पवत्सं गार्हपत्यशृतं गार्हपत्ये प्रथमं संपात्य ततो दक्षिणाग्नितन्त्रं (Cod. °ग्नि°) कृत्वा पूतीकैः स्तरणं। तत अभ्यातानान्तं कृत्वा तमेव साम्पवत्सं संपात्य तत आहवनीयभागस्तरणं। ततस्तमेव साम्पवत्सं संपात्यानेनैव सूक्ते ततः पश्चात्सकृदभिमंत्रणं कृत्वा ततो ऽश्नाति। गार्हपत्यप्रभृति उत्तरं कुर्यात्। आशनं गार्हपत्यदेशे करोति। उत्तरतन्त्रं। व्रतग्रहणादि करोति। दक्षिणाग्न्याहवनीयगार्हपत्येषु यथाक्रमं व्रतग्रहणादि ...। गार्हपत्यस्य दर्भैः स्तरणं। दक्षिणाग्नेः पूतीकैः। आहवनीयस्य भाङ्गाभिः...। समाप्तं समुद्रकर्म. —

## Kaṇḍikā 23.

sū. 1. अथ नवे गृहे अग्निशालायां गोशालायां वा ग्रामे वा पुरे वा अन्यत्राभिततेषु वा कर्माणि . . . पाषाणमये वा काष्ठमये वा तृणमये वा इष्टकामये वा सर्वत्र नवे वासिते इदं कर्म . . . — sū. 6. तूष्णीमादौ वाग्यमनं कृतमिहैव स्तेति वाग्विसर्गः. — sū. 7. . . अग्नौ रविकां (!) औदुम्बरं दत्त्वा आज्यं जुहोति। धूमं नियच्छति। लेपं प्राश्नीयात्. — sū. 9. दायादेषु विभागकर्म वक्ष्यामः. — sū. 12. अथ चित्राकर्म चित्रानक्षत्रे उच्यते . . . संभारान्संपातयति। वृक्षशाखा। उदकं। करम्बकं। औदुम्बरशकलं। ताम्रकुरिका. — sū. 14. . . . वत्सकर्णौ छिनत्ति. — sū. 15. . . . कर्णलोहितं (emend कर्माभ्यां in Dārila's comment to कर्णाभ्यां) रसमिश्रितं . . . अश्नापयति (!) पुष्टिकामः. — sū. 17. अथ कृषिकर्म उच्यते. —

Kaṇḍikā 24.

sūs. 1. 2. बीजवापन कर्म करोति ... केदारे वा क्षेत्रे निवपति। चीन्मुष्टीन्बीजस्य । ततः पांसुभिराच्छादयति. — sū. 3–6. उच्चस्थाने गत्वा ततो ऽभ्यातानान्तं कृत्वाभि त्यमिति चतुर्ऋचेन सूक्तेनोदपात्रं संपात्य तदुदपात्रं सोमरसमिश्रं साज्यपयस्कं ओदनं संपात्याभिमंत्र्याश्नाति। तत उत्तरतन्त्रं। प्राग्द्वारप्रत्यग्द्वारे मण्डपे एतत्कर्म। पश्चान्मण्डपमग्निना दहति. — sū. 7. ... एकवारप्रसूता गौर्गृष्टिः। गोदाममणिं ... बध्नाति पुष्ट्यर्थी. — sū. 8. ... अश्नाति पुष्ट्यर्थी. — sū. 9. ... इत्यृचा वपया वृषभस्येन्द्रं यजते वशाविधानेन (Kāuç. 44. 1 fg). — sū. 16. अथ प्रवक्ष्यत एकाग्निकस्य इदं कर्म कथ्यते। इहैव स्तेति गृहं मानुष्यांश्चावेक्षते. — sū. 18. अथ प्रवेशो याजमानं (!) यदा आगच्छति तदा इदं कर्मोच्यते। मौनं कृत्वा समिधमादाय गृहं दृष्ट्वा ऊर्जं बिभ्रदिति षडर्चं सूक्तं जपति। वामेन हस्तेन समिधः कृत्वा दक्षिणेन शालावलीकं संस्तभ्य जपति ऊर्जं बिभ्रदिति। तत ... समिध आदधाति अग्नौ। सुमङ्गलीति(!) कल्पजेन स्थूणे गृह्णात्युपतिष्ठते। यद्वदामीत्यृचा वाग्विसर्गं करोति। गृहपत्न्यासाद उपविश्योदपात्रं निनयति तूष्णीं ... दूर्वाग्राणि अङ्गुलिकायां (!) कृत्वा पूर्वापरमिति (the words दूर्वापरिमिति in Dārila are a corruption of this pratīka) षडर्चं सूक्तं (vii. 81) जपति। अमावास्यायां केचिच्चन्द्रमसं दृष्ट्वा जपं कुर्वन्ति पुष्टिकामाः. — sū. 19. अथ वृषोत्सर्गविधिं वक्ष्यामः। ... ऋषभं संपात्य विवाहवदग्निपरिणयनं कृत्वा सह वत्सतरीभिः विसर्जयति. — sū. 22. अत ... एकादशाहे वृषभं करोति तदा शान्त्युदकं कृत्वा ततो वृषोत्सर्गं करोति। वृषोत्सर्गः समाप्तः। वृषभपुच्छं गृहीत्वा देवपितृपिभ्यो ऽहं ददे ऋषभमुच्चारयति. — sūs. 24. 25. अथाग्रहायणीकर्म उच्यते। रात्रौ अभ्यातानान्तं कृत्वा चयश्चरवः श्रपयितव्याः। सत्यं बृहदित्यनुवाकेन पश्चादग्नेर्दर्भेषु खदायां भूमौ एकं चरुं सकृत्सर्वंहुतं जुहोति. — sū. 31. सत्यं बृहदिति नवभिः शन्तिवेति दशम्या (xii. 1. 1—9 and 59) ... — sū. 36. सत्यं बृहदित्यनुवाकेन कृषिकर्म आयोजनं कर्म भवति. — sū. 37. यस्यां सदोहविर्धाने इति तिसृभिराज्यं जुहोति। तत उत्तरतन्त्रं। वरो म आगमिष्यतीति वरस्य प्रार्थितोऽभिलाषः उत्कृष्टपुत्रधनादि वा सर्वफलकामः. — sū. 38. ... उपतिष्ठते पृथिवीं पुष्टिकामः ... — sū. 39. निधिं बिभ्रतीति द्वाभ्यामुपतिष्ठते पृथिवीं मणिहिरण्यद्रव्याणिधिरत्नकामः. — sū. 41. वृष्टिकाले यस्यां कृष्णमिति नवोदकमभिमंत्र्याचमनं करोति पुष्टिकामः। यस्यां कृष्णमित्यृचा नवोदकमभिमंत्र्य स्नानं करोति पुष्टिकामः। नवो-

दकस्य कर्म समाप्तं. — sū. 45. सर्वे मन्त्राः पुष्टिकर्मसु पठिताः तृतीये ध्याये तेषामुपधानमुपस्थानं भवति ...। एते मन्त्राः पौष्टिकाः...पौष्टिकानां सर्वेषां मन्त्राणां हविरुपधानमुपस्थानं च्चा करोति विकल्पेन... — sū. 46. At the end of the adhyāya Keç. has the following: ततः श्लोकः।

पूर्वं निर्ऋतिकर्माणि सर्वपापापनुत्तये।
पौष्टिकानि ततः पश्चात्तृतीये संहिताविधौ॥

सप्तमी कण्डिका। इति कौशिकपद्धतौ तृतीयोऽध्यायः. —

## Adhyāya iv.

### Kaṇḍikā 25.

sūs. 1—3 ..भेषजशान्तिर्भैषज्यशब्देनोच्यते। तत्र द्विविधा व्याधयः। आहारनिमित्ता अन्यजननपापनिमित्ताश्च। तत्राहारनिमित्तेषु चरकवाहडसुश्रुतेषु... व्याध्युपशमनं भवति। अशुभनिमित्तेषु अथर्ववेदविहितेषु शान्तिकेषु व्याध्युपशमनं भवति। तथा चाग्रे वक्ष्यति। अनूक्तान्यप्रतिषिद्धानि (!) भैषज्यानामंहोलिङ्गाभिः (cf. Kāuç. 32. 26, 27) सर्वाणि कर्तव्यानि। उक्तान्यनूक्तानि (!) च कर्तव्यानि। बन्धनपायनादीनि च कार्याणि. — sū. 5. ..मुखवलीर्विमार्ष्टि अङ्गवलोश्च ... तरुणस्य यदि वलयस्तदा एतत्कर्म. — sū. 6. अथ ज्वरातिसारभैषज्यान्युच्यन्ते। ... मुञ्जपुषमणिं मुञ्जरज्ज्वा ... बध्नाति. — sū. 7. अतिसारे चातिमूत्रे च भैषज्यं ... – sū. 8 ... अपानं अञ्चति. — sū. 9 ... अपानं शिश्नं वा नाडीं वा व्रणमुखं धमति अतिसारे। समाप्तानि ज्वरातिसारे अतिमूत्रे ऽङ्गनाडीप्रवाहे च भैषज्यानि. — sū. 10. अतिदुःखमूत्रे दुःखपुरीषकरणे च शमनभैषज्यान्युच्यन्ते। ... विद्मा शरस्येति द्वितीयेन हरीतकीं कर्पूरं वा संपात्याभिमंत्र्य बध्नाति. — sū. 12 ... विषितं ते वस्तिबिलमिति द्वाभ्यामृग्भ्यां मूषिकमृत्तिकोपरि उपविश्य जपति। ... तृणोपरि उपविश्याभिमन्त्रयते। ... वस्तिबिलमुखमभिमन्त्रयते। ... दारुतक्षशकलान्धिमथितोपरि उपविश्य ततो ऽभिमन्त्रयते। ... जरत्प्रमन्दोपरि उपविश्याभिमन्त्रयते। ... दारुतक्षशकलानामुपरि उपविश्य व्याधितं ततो ऽभिमन्त्रयते मूत्रादिप्रतिबन्धे मूत्रं मुच्यतामिति (i. 3. 6—9) लिङ्गात्. — sū. 13. ...व्याधितमारोहयति. — sū. 14. ...व्याधितः शरं प्रक्षिपति. — sū. 15. ... शरशिश्नमभिमंत्र्य निष्फोटति (!) शिश्नं चर्मणो निःसारयतीत्यर्थः. — sū. 16. ... लोहशलाकामभिमंत्र्य शिश्ने प्रवेशयति। मूत्रमार्गं विदारयति. — sū. 17. विद्मा शरस्येति द्वितीयेन द्रुघ्नीं व्या-

धनुषं (! for ज्या° ?) जघने शिश्नदेशे ऊर्ध्वं कृत्वा गोदोहन्यामुदकं कृत्वा यवानेकविंशतीन् (!) प्रक्षिप्य तेन उदकेन धनुष्प्रपरिफलं सिञ्चति सूक्तं जपित्वा । यथा उदकं शिश्ने पतति तथा कार्यं. — sū. 18. . . . यवगोधूमवल्लीपद्ममूलं पाविका एतानि क्वाथयित्वाभिमंत्र्य व्याधितं पाययति। समाप्तानि मूत्रप्रतिबन्धे दुःखमूत्रकरणे दुःखपुरीषकरणे . . . उदरपूर्णनिरोधकरणे च एतानि भैषज्यानि कार्याण्यारोग्यकामः (!). — sū. 20. अथ सर्वरोगभैषज्यान्युच्यन्ते। अभ्यातानान्तं कृत्वा अस्वयो यन्तीति...वायोः पूत इति . . . सूक्तेनाज्यं जुहोति। पलाशोदुम्बराद्याः समिध आदधाति सर्वव्याधिभैषज्यकामः. — sū. 21. अथ सोमभक्षणे भैषज्यमुच्यते।... सोमपवने सोमरसायने सोमपाने सोमाभिषवे च सोमविषये व्याधि (!) उत्पन्ने भैषज्यं समाप्तं. — sū. 22. अथ भूततन्त्रकर्माण्युच्यन्ते। भूतपिशाचशङ्कायां शान्तिरुच्यते।...कुक्कुसाञ्जुहोति।...तुषाञ्जुहोति।...बुसं जुहोति। . . . काष्ठशकलानि जुहोति (cf. Kāuç. 14. 15) । . . . अभ्याधेयानां धूमं नियच्छति। पिशाचगृहीतं पुरुषं धूमं पाययति। गृहे ग्रामे वा पत्तने क्षेत्रे वा देवगृहे वा यत्र क्वचित्पिशाचशङ्कास्ति तत्र होमं कृत्वा धूमं नियतं कुर्यादित्यर्थः। . . . पिशाचगृहीतं पुरुषमन्वाह . . . आक्रोशं ददाति. — sū. 23. कर्कटिकासमिध आदधाति।... मुसलकाष्ठशकलानि जुहोति। . . . खदिरसमिध आदधाति। . . . सर्षपसमिध आदधाति. — sū. 24. . . . खदिरवितस्तिमात्रशङ्कून्सप्त वा नव वा अभिमंत्र्य पश्चादग्नेर्निखनति। भूमिं समां करोति। अर्च्यो नि विध्य इत्यृचा निखननमन्त्रः पिशाचोपद्रवे. — sū. 26. . . . शर्करानभिमंत्र्य (!) शयनं वा अंतराणि वा गृहं वा . . . परिकिरेत् रक्षोभये. — sūs. 27—29. अमावास्यायामभ्यातानान्तं कृत्वा शरमयं बर्हिः स्तृणाति सर्षपेध्मानामुपसमाधानं। . . . सकृद्गृहीतान्यवसक्तूञ्जुहोति।... एतस्मिन्नान्ते (!) यवराशिमध्यात् मुष्टिमेकां गृहीत्वा उलूखलेन . . . अप्रदक्षिणं पिष्यते ततो व्याधितं संपात्य शणसूत्रेण जिह्वामार्जनं करोति। ततो ग्रहणमुक्तो (! for °मुक्तं ?) न करोति शणेन (Cod. शणे) जिह्वामार्जने ततो न गतो ग्रह इति विजानीयात्. — sū. 30. अथ ग्रहाभिचार उच्यते इदं कर्म अवश्यमस्य ग्रहस्य वशीकरणमुच्यते. — sū. 30 (note 1, p. 70). ...पलाशपुटेन जुहोति. — sūs. 31—33. अथास्मिन्गृहे पिशाचो ऽस्ति वा न वास्ति संशये इदं कर्म उच्यते। . . . सर्षपेध्मं शरमयं बर्हिरभिमंत्र्य शालाया उपरि निदधाति। . . . ततः प्रभाते निरीक्षणं। विकृते पिशाचशङ्का। तदा उक्तो होमः वीरिणतूलमित्यादि (sū. 30). — sū. 34 (note 7) . . . पिशाचगृहीतं पुरुषं. — sūs. 35—36. रात्रिकर्माण्यु-

यन्ते। रात्रौ . . . उल्मुके अभिमंत्र्य परस्परं संघृष्यति(!)। ततः प्रभाते ब्रह्मिदा इति सूक्तेन (i. 21) प्रक्रामति पदानि ददाति। रक्षोभैषज्यं...समाप्तानि रात्रिकर्माणि. — sū. 37. अथ जलोदरभैषज्यमुच्यते। ... घटे दर्भपिञ्जूलीः प्रक्षिप्यैकविंशतिं गृहतृणानि च प्रक्षिप्य तं घटमभिमंत्र्य ततो व्याधितं सिञ्चति। ततो मार्जनं च। दर्भत्रयमेकत्र बद्धं पिञ्जूलीत्युच्यते। समाप्तं जलोदरभैषज्यं। अभ्यासेन कर्मसिद्धिः दिनेदिने कुर्यात्। जलोदरनाशनार्थं. —

## Kaṇḍikā 26.

sū. 1. अथ वातपित्तश्लेष्माणि (!) भैषज्यान्युच्यन्ते। ... मांसमेदो ऽभिमंत्र्य पाययति वातविकारे। ... मधु अभिमंत्र्य पाययति श्लेष्मविकारे। ... घृतमभिमंत्र्य पाययति वातपित्तसहविकारे। ... तैलमभिमंत्र्य पाययति वातश्लेष्मविकारे. — sūs. 2—6. अतिकासे शीर्षक्तिशिरोवेदनायां च कर्माण्युच्यन्ते। व्याधितं शिरो मौञ्जवेष्टितं कृत्वा वामेन हस्तेन वपनं जालसहितं (Cod. जाला°) गृहीत्वा जरायुज इति सूक्तेन लाजान्प्रकिरन्व्रजति व्याधिदेशं यावत्। तत्रैव मुञ्जप्रश्नं लाजा (!) च वपनानां प्रक्षेपः। वामेन हस्तेन वपनं मौञ्जदन्दुकं (!) च गृहीत्वा दक्षिणेन हस्तेन ज्यां द्रुघ्नीं गृहीत्वा ... व्याधितमग्रे कृत्वा यत्र व्याधिरुत्पन्ना तत्र स्थाने गत्वा जरायुज इति जपित्वा मौञ्जप्रश्नं वपनं क्षिपति व्याध्युत्पत्तिस्थाने। ज्यां तूष्णीं प्रक्षिपति। वातज्वरे कटिभङ्गे शिरोरोगे च वातगुल्मे वातविकारे च सर्वरोगे च भैषज्यं। धनुर्वाते अङ्गकम्पने वाते शरीरभङ्गे (Cod. शरीरे°) सर्ववातविकारे भैषज्यं. — sū. 8. ...घृतमभिमंत्र्य नासिका (!) नस्तं दद्यात्. — sū. 9. जरायुज इति सूक्तेन पञ्चपर्ववेणुदण्डं ललाटे संस्तभ्य जपति। शिरोरोगकटिभङ्गे वा वातगुल्मे विकारे च। लिङ्ग्युपतापः समाप्तः. — sū. 10. अथ लोहितं वहति शरीरमध्ये बहिश्च ... कर्माण्युच्यन्ते। पञ्चपर्ववेणुदण्डं रुधिरवहनस्थाने दत्वा अमूर्या इति सूक्तं जपति। ... रथ्यायाः पांसून्गृहीत्वाभिमंत्र्य रुधिरव्रणे विकिरति ... — sū. 11. ...अर्भकपालिकां ...बध्नाति। ...केदारमृत्तिका इति. — sū. 12. ... अर्भकपालिकामभिमंत्र्य पाययति। अर्भकपालिका शुष्कं (!) पङ्कमृत्तिका। स्त्रीरजसोऽतिप्रवर्तने भैषज्यं रुधिरप्रवाहे च. — sū. 14. अथ हृद्रोगे कामले चेत्यादिभैषज्यान्युच्यन्ते ... — sūs. 16. 17. अनु सूर्यमिति सूक्तेन गो रक्तचर्मच्छिद्रमणिं गोदुग्धे (Cod. °ग्ध) तं दत्वा संपात्याभिमंत्र्य बध्नाति दुग्धं च पाययति। अभ्यातानाद्युत्तरतन्त्रं। कामले हृद्रोगे चेत्यादिलिङ्ग्युपतापः. —

sū. 18. हरिद्रौदनं व्याधितस्य भोजनं दत्वा तस्योच्छिष्टं चानुच्छिष्टं चैकत्र कृत्वा तेन च उद्वर्तनं कृत्वा शिरःप्रभृत्यारभ्य यावत्पादौ उद्वर्त्य ततो व्याधितं च खट्वायामुपवेश्य। खट्वाधस्तात् शुकां काष्ठसुसुकं(!) च गोपीतिलकां च एते त्रयः पक्षिणः सव्यजङ्घायां हरितसूत्रेण बद्धा खट्वाधस्ताद्बध्नाति . . . अपस्मारे भैषज्यं ! . . . उदकमभिमंत्र्य व्याधितं स्नापयति. — sū. 19. . . . मन्यमभिमंत्र्य प्रपाद्य प्रयच्छति भक्षार्थं। सर्वत्र गृहद्वारे अग्रे व्याधितं कृत्वा तमग्रे प्रवेश्य स्वयं प्रविश्य ततो भक्तमभिमंत्र्य व्याधिताय प्रयच्छति। सर्वत्र यत्रयत्र प्रयच्छतिशब्दः तत्रतत्रैवं बोद्धव्यं; cf. Kāuç. 7. 18. — sū. 20. अनु सूर्यमिति सूक्तेन शुष्कं चन्दनमभिमन्त्रयेत्। काष्ठशुष्कचन्दनमभिमन्त्रयेत् (!) . . गोपीतिलकां . . . यस्मिन्कस्मिंश्च दृष्ट्वा वदन्तीं तत्राभिमन्त्रयते व्याधितः. — sū. 21. . . . वृषभहृदयलोमभिः सुवर्णवेष्टितं मणिं कृत्वा संपात्याभिमंत्र्य व्याधिताय बध्नाति। . . .समाप्तानि अपस्मारविस्मयहृद्रोगकामलकरोहिणकानि (!) भैषज्यानि. — sū. 22. अथ श्वेतकुष्ठभैषज्यान्युच्यन्ते। श्वेतकुष्ठं गोमयेन प्रघृष्य यावल्लोहितं दृष्ट्वा... भृङ्गराजहरिद्राभ्यां इंद्रवारुणी नीलिका पुष्पा एताः पञ्च पिष्ट्वाभिमंत्र्य कुष्ठं प्रलिम्पति. — sū. 23. पलितानि छित्वा घृष्ट्वा अवलिम्पति. — sū. 24. अथ मारुतान्युच्यन्ते।. Then follow the rites described at Kāuç. 41. 1–7, but with the substitution of the pratīkas i. 23. 1; 24. 1, instead of iv. 15. 1; vii. 18. 1. The entire performance winds up with the following: समाप्तानि कुष्ठभैषज्यानि श्वेतपलितनाशनं दुर्भिन्ननाशनं च. — sū. 25. अथ ज्वरभैषज्यमुच्यते। नित्यज्वरे वेलाज्वरे सततज्वरे एकान्तरितज्वरे चातुर्थिकज्वरे च ऋतुज्वरे च . . . — sū. 26. अथोद्वेगविनाशभैषज्यान्युच्यन्ते . . . — sū. 28. उप प्रागादिति सूक्तेन उल्मुकद्वयमभिमंत्र्य घृषोयत (!)। रात्रौ उषाकाले एतत्कर्म। ततः प्रभाते स्वस्तिदा इति सूक्तेन दक्षिणेन पादेन प्रक्रामतीति (Kāuç. 50. 1) स्वस्त्ययनं। वृद्धबालयुवस्त्रीपुरुषाणामकस्मादुद्वेगः प्रलापो वा भवेत्तदा एतत्कर्म कुर्यात्. — sū. 29. गन्धर्वराक्षसे आप्सरसे भूतग्रहादिषु भैषज्यान्युच्यन्ते... — sū. 30. चतुष्पथे व्याधितं कृत्वा तस्य शिरसि दर्भदंडुकं (!) कृत्वा तस्योपरि कपालमग्निपूर्णं प्रज्वालितं कृत्वा ततः प्रज्वालिताग्नौ . . . घृताक्ताः सर्वौषधीर्जुहोति. — sū. 31. व्याधितस्य वल्लणिकां (!) सर्वौषधिसहितां हस्तेन कृत्वा नदीमुखसंमुखां प्रविश्य (!) . . . नदीमध्ये वल्लणिकायां सर्वौषधिं घृताक्तां कृत्वा . . . ततः प्रक्रामति। उदकमध्ये सर्वौषधीर्जुहोति घृताक्ताः . . . पश्चात्स्थितो व्याधितं सिञ्चति. — sū. 32. ततो मृन्मये आमपात्रे होमशेषाः (!) सर्वौषधीः कृत्वा पक्षिणो यस्मिन्वृक्षे वसन्ति तत्र

त्रिपादे कृत्वा बध्नाति. — sūs. 33—40. अथ लौकिके शापे वैदिके शापे च स्त्रीणामाक्रोशे च पुरुषाणां च भैषज्यमुच्यते। सर्वस्मिन्संहिताविधिकर्मणि प्रधानकर्ममध्ये नवं घटं यत्प्रथममास्थापितमुत्तरतस्तेनोदकेन हिरण्यवर्णा इति सूक्तेन (i. 33) अभिमन्त्रितेन कारयिताभिषेचयेत्। सर्वत्र मेधाजननादिकर्मसु। ततः पश्चान्मणिबन्धनादिकर्म कुर्यात्। भैषज्येष्वभिषेकं न कुर्यात्। अभ्यातानान्तं कृत्वा अघद्विष्टा इति सूक्तेन यवमणिं संपात्याभिमंत्र्य पुनः सूक्तं जपित्वा बध्नाति। . . . लौकिके आक्रोशे वैदिके च ब्राह्मणस्य शापे चाक्रोशे च क्रूरचक्षुर्दृष्टिनिपाते च पिशाचरक्षादिषु भैषज्यं समाप्तं। अथ रक्षोग्रहे भैषज्यमुच्यते। आज्यतन्त्रं कृत्वा शं नो देवीति सूक्तेन पृश्निपर्णीमोषधिं पिष्ट्वा संपात्याभिमंत्र्य पुनः सूक्तं जपित्वा शरीरं प्रलिम्पति। अभ्यातानाद्युत्तरतन्त्रं। पापगृहीते च स्त्रीगर्भस्रावे च मृतापत्यायां च क्रव्यादगृहीते च पिशाचगृहीते च रक्षोभयभैषज्यं समाप्तं। अथ राजयक्ष्मादिभैषज्यमुच्यते। तन्त्रं कृत्वा वरणो वारयाता इति तृचेन वरणवृक्षमणिं . . . बध्नाति। . . . राजयक्ष्मादिपूगव्याधिषु श्वेतोदुम्बरकुष्ठाद्यष्टादशजातिषु ज्वरादिसर्वरोगेषु भैषज्यं समाप्तं। अथ वातविकारे भैषज्यमुच्यते। . . . पिप्पली क्षिप्तभेषजीमिति सूक्तेन पिप्पलद्रव्यं . . . आशयति। . . . वातविकारे धनुर्वातगुल्मे वातशूले क्षिप्तवातप्रदोषे कर्मकृते वाते उत्पन्ने सर्वव्याधिविकारे भैषज्यं समाप्तं। जलोदरे भैषज्यमुच्यते। . . . विद्रधस्य बलासस्येति तृचेन सूक्तेन व्याधितस्य मूर्ध्नि संपातानानयति। . . . सर्वव्याधिविसर्पणे प्रकोपे च बलासे च अन्तर्विसर्पणे च अक्षिविसर्पणे च . . . विद्रविसर्पणे(!) च हृदयामये च अज्ञातराजयक्ष्मणि च एतेषां भैषज्यं समाप्तं। . . . या बभ्रव इति सूक्तेन दशवृक्षशकलानि लाक्षाहिरण्येन वेष्टितं मणिं कृत्वा . . . बध्नाति। सर्वव्याधिभैषज्यं समाप्तं. — sū. 41. अथ क्षैत्रियव्याधिभैषज्यमुच्यते . . . क्षैत्रियो व्याधिर्लिङ्गी पितृपर्यागतः क्षैत्रियरोगः कुष्ठक्षयरोगः ग्रहणीदोषः सर्वशरीरविस्फोटकारः . . . — sū. 43. बभ्रोरर्जुन काण्डस्येत्यृचा अर्जुनकाष्ठं यवबुसं तिलपिञ्जिकां च एकत्र त्रीणि बद्ध्वा . . . बध्नाति। . . . आकृतिलोष्टं जीवकोषण्यां बद्ध्वा . . . बध्नाति। . . . वल्मीकमृत्तिकां . . . जीवकोषण्यां बद्ध्वा . . . बध्नाति। . . . श्वेतवतः पशोश्चर्म जीवकोषण्युच्यते. —

Kaṇḍikā 27.

sūs. 3. 4. शालातृणानि गर्ते प्रक्षिप्य तस्मिन्गर्ते व्याधितमुपवेश्य तत आचामयति . . . अवसिञ्चति। . . . समाप्तं क्षैत्रियस्य भैषज्यं — sū. 5. अथ ब्रह्मग्रहे भैषज्यमुच्यते। . . . दशवृक्षेति सूक्तेन वृक्षविकल्पेन पला-

शादिदशवृक्षशकलानि गृहीत्वा लाक्षाहिरण्यवेष्टितं मणिं कृत्वा . . . बध्नाति. — sū. 6. दश ब्राह्मणा अथर्वाङ्गिरसः सुहृदो दशवृक्षेति सूक्तं जपन्तो व्याधितं शरीरमभिमृशन्ति. — sū. 7. पुनः क्षेत्रियभैषज्यान्युच्यन्ते . . . — sū. 9. उदकतृषाक्रान्तभैषज्यमुच्यते . . . — sū. 13. सवासिनाविति सूक्तेन मन्थघटमभिमंत्र्य पाययति व्याधिताव्याधितौ एकवस्त्रपरिहितौ सन्तौ. — sū. 14-17. अरुषोउदरगण्डुलक-भैषज्यान्युच्यन्ते। इन्द्रस्य या महीति सूक्तेन कृष्णचणकान्घृतमिश्राञ्जुहोति। . . .गोवालचित्रितं शरसंध्यं परिवेष्य (cf. sū. 26) पाषाणेन चूर्णयति। . . . अग्नौ प्रतपति। ततः सूक्तान्ते ऽग्नौ आदधाति. — sū. 18. सव्ये हस्ते पांसून् (Cod. पांशं) कृत्वा दक्षिणेन विसृज्य दक्षिणामुखः स्थितः सूक्तं जपित्वा व्याधितस्योपरि किरति। अरुषोगण्डुलकानां भैषज्यं. — sū. 19. पांसून् (Cod. पांशं) मर्दयति हस्ताभ्यां व्याधितः. — sū. 20. . . . पला-शोदुम्बराद्याः समिध आदधाति। समाप्ता उदरकृमयः उदरगण्डुलकाश्च दृष्टकृमयश्च तेषां सर्वेषां भैषज्यं. — sū. 21. अथ गोकृमिभैषज्यान्युच्यन्ते . . . — sū. 26 उद्यन्नादित्य इति सूक्तेन घृतमिश्रान्कृष्णचण-काञ्जुहोति। . . . उद्यन्नादित्य इति सूक्तेन शरं गोवालवेष्टितं धारयति पाषाणेन etc., essentially as in the comment upon sūs. 14-20. — sūs. 27—28. सर्वव्याधिभैषज्यमुच्यते। आज्यतन्त्रं कृत्वा व्याधितं पर्वसु बद्ध्वा। अक्षीभ्यां त इति सूक्तेनोदपात्रं संपात्य ततः पुनः सूक्तं जपित्वाव-सिच्य व्याधितस्य पर्वग्रन्थिर्विमुच्यते। तत उत्तरतन्त्रं। समाप्तमक्षिरोगना-सिकाकर्णशिरोजिह्वाग्रीवारोगयक्ष्मादिसर्वभैषज्यं. — sū. 29. हरिण-स्येति सूक्तेन हरिणशृङ्गमणिं . . . बध्नाति। . . . हरिणशृङ्गेण सहोदकं . . . आचमयति। अथोषाकाले एतत्कर्म। हरिणचर्मशङ्कुधानं प्रज्वा-ल्योदकेन प्रक्षिप्य ततो . . . व्याधितमवसिञ्चति. — sū. 32. बालरो-गगृहीते च मैथुनदोषभैषज्यान्युच्यन्ते। . . . पूतिगन्धमत्स्यसहितमोदनं . . . व्याधिताय प्रयच्छति भक्षणार्थं. — sū. 33. अरण्यतिलैः प्रज्वालित-मुदपात्रमभिमंत्र्य प्रक्षिपति उषाकाले। अवसिञ्चति व्याधितं। मैथुनगा-जयक्ष्मणि भैषज्यं। . . . अरण्यशणेन . . . अरण्यगोमयेनावज्वालितमु-दकमभिमंत्र्यावसिञ्चति उषाकाले। मार्जनमाचमनं। . . . चित्यादिभिः (Cod. चित्याद्याः; cf. Kāuç. 8. 16) प्रज्वालितमुदकमभिमंत्र्य व्याधित-मवसिञ्चति। मार्जनमाचमनं च। केचित्तिलशणादिचतुर्षु कर्मसु अरण्ये अवसेकमिच्छन्ति केचिद्गृहे अवसेकमिच्छन्ति . . . — sū. 34. अथ सर्वभैषज्यान्युच्यन्ते। . . . आ गाव इति दशभिः सूक्तैः (iv. 21—30) . . . मुञ्च शीर्षक्त्या इत्यृचा . . . घटमुदकपूर्णं संपात्याभिमंत्र्य व्याधितमवसिञ्चति . . . —

## Kaṇḍikā 28.

sū. 1. स्कन्दविषभये भैषज्यान्युच्यन्ते। तत्तद्देवतायै नमस्कारं कृत्वा ततो ब्राह्मणो जज्ञे वारिदमिति सूक्ताभ्यां (iv. 6; iv. 7) उदकमभिमंत्र्य आचामयति . . . संप्रोक्षति विषदुष्टं — sū. 2. . . . क्रमुकवृक्षशकलं सहोदकमभिमंत्र्य तत आचामयति . . . अभ्युक्षयति . . . दूर्वावज्वालितमुदकमभिमंत्र्य व्याधितमवसिञ्चति। . . . जीर्णहरिणचर्मावज्वालितमुदके प्रक्षिप्य तमभिमंत्र्य ततोऽवसिञ्चति। . . . मार्जनिकावकरतृणैरवज्वालितमुदकमभिमंत्र्यावसिञ्चति. — sū. 3. . . . उदपात्रं संपात्य तत आप्लावयति विषदुष्टं। . . . विषलिप्ताभ्यां सक्तुमन्थमुपमथ्य ततोऽभिमंत्र्य पाययति। . . . मदनफलानि प्रत्यृचमभिमंत्र्य प्रत्यृचं भक्षयति यथा न छर्दयति तथा च कर्तव्यं... — sū. 5. अथ शस्त्राद्यभिघाते रुधिरप्रवाहे भैषज्यान्युच्यन्ते। रोहण्यसीति सूक्तेन लाक्षोदकं क्वथितमभिमंत्र्य व्याधिदेशमवसिञ्चति। उषाकाले कर्म। अस्थिभङ्गे रुधिरप्रवाहे शस्त्राभिघातादौ भैषज्यं. — sū. 7. रक्षोभैषज्यमुच्यते। ...सदंपुष्पा संध्या प्रसिद्धा... — sū. 8. अथ सर्वव्याधिभैषज्यमुच्यते। भवाशर्वौ मन्वे वामिति सूक्तेन (iv. 28)... — sū. 9. सर्वभूतग्रहभैषज्यमुच्यते। . . . शमीपर्णचूर्णं शमीफले कृत्वाभिमंत्र्य सक्तुमध्ये ददाति भक्षार्थं रक्षोग्रहभैषज्यं. — sū. 10. . . . शमीचूर्णं शमीफले कृत्वाभिमंत्र्यालंकारे ददाति. — sū. 11. . . . शमीचूर्णं शमीफले कृत्वाभिमंत्र्य . . . व्याधितस्य शालां चूर्णैः परिकिरति. — sū. 12. अमतिगृहीते पुरुषे भैषज्यमुच्यते। . . . प्रज्ञानष्टे अज्ञानगृहीते अधर्मगृहीते त्रिवर्गे च विनष्टे द्यूतक्रीडाद्यतिप्रवृत्ते कुबुद्धिभैषज्यं. — sū. 13. राजयक्ष्मणि शिरोरोगे कुष्ठमये सर्वगात्रवेदनायां भैषज्यमुच्यते। यो गिरिष्वजायत इति सूक्तेन (v. 4) अश्वत्थो देवसदन इति द्वे (v. 4. 3, 4) गर्भो असीति तृचेन च (v. 25. 7-9) कुष्ठपिष्टं नवनीतमिश्रमभिमंत्र्य अप्रतिहारं व्याधितशरीरं प्रलिम्पति. — sū. 14. अथ शस्त्राभिघाते भैषज्यमुच्यते। रात्री मातेति सूक्तेन (v. 5) दुग्धलाक्षां क्वाथयित्वाभिमंत्र्य पाययति। शस्त्राभिघाते काष्ठाभिघाते पाषाणपतनाभिघाते अग्निदाघे सर्वशरीराभिघाते भैषज्यं समाप्तं. — sū. 15. सूतिका स्त्री अरिष्टकस्य भैषज्यान्युच्यन्ते। ब्रह्म जज्ञानमनाप्ता ये सहस्रधार एव ते इति सूक्तेन (v. 6) भक्तमभिमंत्र्य ददाति भक्षणार्थं... — sū. 16. समाप्तं स्त्रीप्रसवदोषे सूतिकारोगे च भैषज्यं। अद्भुतदर्शने दोषनाशनभैषज्यं. समाप्तं। सर्वाद्भुतेषु भक्तकर्म वा मन्थकर्म वा आचमनकर्म वा कुर्यात्। यानि चरकादिवैद्यकेषु अद्भुतानि पठ्यन्ते sū. 17. अथ . . तेषां सर्वेषामियं शान्तिभैषज्यं भवति . . . —

सर्वव्याधिभैषज्यान्युच्यन्ते . . . — sū. 19. . . . द्वौ संपातौ भूमौ दत्त्वा ततः संपातितां भूमिभृत्तिकां गृह्य(!) तत उदपात्रे प्रक्षिप्य . . . व्याधित-माप्लावयति. —

## Kaṇḍikā 29.

sū. 1. सर्वविषभैषज्यमुच्यते . . . — sū. 2—4. यत्ते अपोदकमि-त्यृचा (v. 13. 2) अप्रदक्षिणं परिक्रामति व्याधितं (!)। विषस्तम्भनभैषज्यं। . . . शिरसि शिखां बध्नाति। . . . श्वेतवस्त्रेण ग्रन्थिं बध्नाति। . . . शण-सूत्रे ग्रन्थिं बध्नाति। विषं न विसर्पति देशस्थितं भवति शरीरे न सर्पति विषस्तम्भनं भवति. — sū. 5. वृषा मे रव इत्यृचा (v. 13. 3) यस्मिन्स्थाने दृष्टं(!) तं स्थानं न पीडयति। ऋचं जपित्वा दंशाद्विषमन्यत्र गच्छति। विष-शासने भैषज्यं. — sū. 6. चक्षुषा ते चक्षुरित्यृचा (v. 13. 4) आचार्य-स्ततः प्रदक्षिणं परिक्रामति। अपेह्यरिरसीत्यृचं (vii. 88. 1) जपित्वा तृणानि प्रज्वाल्य ततो अह्यभिमुखं प्रक्षिपति. — sū. 7. अपेह्यरिरित्यृचं (vii. 88. 1) जपित्वा यतो दृष्टस्ततो (!) ज्वलिततृणानि क्षिपति दर्शनेन. — sū. 8. किरात पृश्न इत्यृचा (v. 13. 5) उदकं गृहतृणावज्वालितमभिमंत्र्य व्याधितं पाययति प्रोक्षति च. — sū. 9. असितस्य तैमातस्येति (v. 13. 6) ऋचा आर्तीज्यापाशं संपात्याभिमंत्र्य बध्नाति — sū. 10. आलिगी च विलिगी च उरुगूलाया इति च द्वाभ्यां (v. 13. 7, 8) मधुमक्षिकां मधुवृक्षमृत्तिकामभिमंत्र्य पाययति. — sū. 14. . . . अलाबुवृत्तं संपा-त्याभिमंत्र्य बध्नाति. — sū. 15. अथ दुष्टवक्तृणां मुखस्तम्भमुच्यते। एका च मे यद्येकवृषो ऽसीति सूक्ताभ्या (v. 15; v. 16) कलापपक्वं (!) मधूदकं च . . . एकत्र कृत्वा . . . व्याधितं पाययति। दुष्टवक्तामुखबन्धनभैषज्यं (!)। दुष्टपुरुषबन्धनं। परोक्षेण वदन्ति — sū. 16. यद्येकवृष इति सूक्तेन (v. 16) भोजनमभिमंत्र्य भक्षयति। शापभैषज्यं . . . — sū. 17. यद्येकवृष इति सूक्तेन (v. 16) गृहद्वारमभिमंत्र्य ददाति अपिदधातीत्यर्थः. — sū. 18. अथ ज्वरभैषज्यमुच्यते . . . — sū. 19. अग्निरुतक्मानमिति सूक्तेन (v. 22. 1) ताम्रस्रुवेण मूर्ध्नि संपातानानयति। तत उत्तरतन्त्रं। एकस्मिन्तन्त्रे द्वावा-ग्निप्रणयनं — sū. 20. अथ कृमिभैषज्यमुच्यते। . . . करीरमूलं संपा-त्याभिमंत्र्य बध्नाति। . . . गोवालैः करीरकाष्ठं वेष्टयित्वा सूक्तं जपित्वा पाषाणेन चूर्णयति। ततः सूक्तेनाग्नौ प्रतपति। ततः सूक्तेनादधाति. — sū. 24. . . . एकविंशत्युशीराणां मूलान्यभिमंत्र्य ततः पाषाणेन कुट्टयति(!) ततः सूक्तं जपित्वा उशीराख्यग्निना दहति. — sū. 26. . . . एकविंश-त्युशीरपिञ्जूलीसहितं संपात्याभिमंत्र्य ततो व्याधितमाप्लावयति. — sū. 27.

अथ राजसभैषज्यमुच्यते। . . . वयोनिवेशनकाष्ठमृतं . . . — sū. 28. अथ सर्पविषभैषज्यमुच्यते . . . सर्पविषलिङ्गोपताप:. — sū. 30. श्लेष्म-भैषज्यमुच्यते। उदकेन इदं क्रियते। अप्स्विदं कृत्वा तत्राग्निं प्रज्वाल्य। अस्थिस्रंसमिति सूक्तेन काष्ठशकलं संपात्य ततः शकलेन संपातवताव-सिञ्चति व्याधितं . . . —

## Kaṇḍikā 30.

sūs. 1. 2. अथाक्षिरोगे भैषज्यमुच्यते। . . . सर्षपकाण्डमणिं संपात्या-भिमंत्र्य वध्नाति सर्षपतैलेन संपातवन्तं करोति। . . . आज्येन प्रधान। अङ्गानि सर्षपतैलेनाभ्यज्य मणिं वा ततो वध्नाति . . — sū. 3. . . . सर्षपशाकं सर्षपतैलेनाभ्यक्तमभिमंत्र्य व्याधिताय प्रयच्छति . . . — sū. 5. . . . मूलचीरं मुखेन प्राश्य ततो ऽभिमंत्र्य अक्ष्णि अक्षिणी व्याधितस्य। मूलचीरं चीरपाटिकाख्यं तदुच्यते . . . — sū. 6. . . . मूलचीरं . . . भक्षयति. — sū. 7. पित्तज्वरभैषज्यमुच्यते। ताम्रस्रुवेण मूर्ध्नि संपाता-नानयति। . . . अस्मिन्तन्त्रे (!) दावाग्निप्रणयनं कुर्यात्. — sū. 8. अथ केशवृद्धिकरणे केशपतने भैषज्यमुच्यते। . . . वृक्षभूमिजातौषधीभिरव-ज्वालितमुदकमभिमंत्र्यावनक्षत्रे ऽवसिञ्चति. — sū. 9. . . . मधु . . . क्वाथ-यित्वा . . . विभीतकां क्वाथयित्वाभिमंत्र्य व्याधितमवसिञ्चति. — sū. 10. . . . दारुहरिद्राहरिद्रे (!) च द्वाभ्यां क्वाथयित्वाभिमंत्र्याव-सिञ्चति. — sū. 11. अथ उदरतुण्डभैषज्यमुच्यते। कृष्णं नियानं सुसु-पर्णैरिति सूक्ताभ्यां (vi. 22; vi. 23) चित्वाद्यौषध्या सह्रितमुदकमभि-मंत्र्य ततो व्याधितमवसिञ्चति. — sū. 12. कृष्णं नियानं ससुपो-रिति सूक्ताभ्यां (vi. 22; vi. 23) मरुतो यजते पाकयज्ञविधानेन यथा वरुणं (cf. Kāuç. 41. 3)। मारुतं चीरौदनं मारुतमृतं etc. as in Kāuç. 40. 7 |. Then follow the practices described at Kāuç. 41. 4-7, along with which are employed the pratīkas mentioned at the beginning of this rite. — sū. 13. अथ हृदयदाघे जलोदरे कामले च भैषज्या-न्युच्यन्ते। . . . नद्युदकमनुलोममाहार्य तत्र वल्मीकतृणानि प्रक्षिप्य . . . व्याधितमवसिञ्चति . . . — sū. 14. अथ गण्डमालाभैषज्यमुच्यते। यद्य च या इति सूक्तेन गोपाम्पूलिकां पलाशत्वं (!) बाधिका अग्नौ प्रज्वाल्य अधस्ताद्-यःसमिध आदधाति. — At this point there is a lacuna in the MS., involving the omission of the comment upon the remaining sūtras of this kaṇḍikā, as well as of the first three sūtras of the next one. Sūtra 16 is commented upon by Keçava at length in connection

with Kāuç. 31. 16. The comment upon sū. 14 of this kaṇḍikā is followed directly by the treatment of 31. 4. —

Kaṇḍikā 31.

sū. 4. ...पुरोडाशं...पयो etc. ...जुहोति। व्रीहीन् etc. ...आवपति। शान्तवृक्षसमिध आदधाति . .। रक्षोग्रहभैषज्यं. — sū. 5. अथ सर्वभैषज्यमुच्यते। वैश्वानरो न ऊतये आ प्रयातु परावतः पावकान् इति सूक्ताभ्यां (vi. 35; vi. 36) उदपात्रमभिमंत्र्य पाययति। . . . सक्तुमन्थं पाययति। . . . हरिद्रां सर्पिषि . . . पाययति। . . . अप्सु घृतमुदकमभिमंत्र्य पाययति. — sū. 6. अपवादे भैषज्यमुच्यते बहुभाषणमधर्मे च प्रवर्तने तस्यापवादः (!)। अभ्यातानान्तं कृत्वा अस्थाद् द्यौरिति पूर्वेण (vi. 44. 1) स्वयंपतितं गोशृङ्गे उदकं कृत्वाभिमंत्र्याचमयति अभ्युक्षति च. — sū. 7. अथ उदरे वा हृदये वाङ्गे वा सर्वाङ्गे वा शूले उत्पन्ने भैषज्यमुच्यते। यां ते रुद्र इति सूक्तेन शूलमणिं संपात्याभिमंत्र्य बध्नाति। शूलं लोहमणिः पाषाणो वा दारिलरुद्रमतं। यां ते रुद्र इति व्याधितमभिमंत्रयते रुद्रभाष्यमतं। शूलभैषज्यं समाप्तं. — sū. 8. रक्षोग्रहे भैषज्यमुच्यते। उत्सूर्य इति चित्याद्योषधीभिः सहोदकघटमभिमंत्र्य व्याधितमवसिञ्चति। . . . शम्युदकेन सह . . . अवसिञ्चति। . . . शमीविम्बमुदकसहितं . . . अवसिञ्चति। . . शीर्षपर्णीमुदके (!) दत्त्वा . . . अवसिञ्चति. — sū. 9. दुष्टगण्डविरिष्टभैषज्यमुच्यते। . . . तैलमभिमंत्र्य व्याधितं गण्डं संमार्ष्टि . . . — sū. 10. स्थूणायां निकर्षति घृष्यति व्रणं। रुधिरकृते दुष्टव्रणे दुष्टगण्डव्याधिभैषज्यं समाप्तं. — sū. 11. अचित- (!) व्रणभैषज्यमुच्यते। . . . गोमूत्रमभिमंत्र्य तेन व्रणमर्दयति। यस्य व्रणस्य मुखं नास्ति। अचतदुष्टव्रणे भैषज्यं. — sū. 15. . . . तृणरजस्फेनमभिमंत्र्य व्रणं प्रलिम्पति। यस्य गण्डदुष्टस्य रुधिरं न च वहति तस्य। समाप्तमचतव्रणभैषज्यं. — sū. 16. गण्डमालाभैषज्यमुच्यते। ... शङ्कं घृष्ट्वाभिमंत्र्य गण्डमालां प्रलिम्पति। ...श्वानलालां कुर्कुटलाला (! for कुर्कुर°?)... प्रलिम्पति। . . . जलौकामभिमंत्र्य गण्डमालायां संसर्जयति रुधिरप्रवाहनार्थं। . . . गृहगोधिकामभिमंत्र्य गण्डमालायां संसर्जयति. — sū. 17. ... सैन्धवलवणं चूर्णयित्वाभिमंत्र्य गण्डमालाया उपरि प्रकिरति। ततस्तस्योपरि निष्ठीवति मुखलालां प्रक्षिपति. — sū. 18. अथ पक्षिणोऽभिघाते भैषज्यमुच्यते। . . . श्वानपदस्थानमृत्तिकामभिमंत्र्य (Cod. °काभि°) पक्षाहतं (!) देशं प्रलिम्पति। पक्षहतभैषज्यं. — sū. 19. ...शुनो मक्षिकामभिमंत्र्याग्नौ प्रक्षिप्य ततो धूपयति व्याधिप्रदेशं। काकगृध्रकपो-

तञ्जिनादोनि पञ्चिणाभिघाते (!) भैषज्यं समाप्तं. — sū. 20. अथ गण्ड-भैषज्यमुच्यते। ग्लौरितः प्र पतिष्यतीति (vi. 83. 3c) अर्धर्चेन गोमूत्रम-भिमंत्र्य गण्डमर्दयति। ... प्रचालयति। ... इन्नमलं ... प्रलिम्पति। ... तृणरजफेनं ... प्रलिम्पति। समाप्तं गण्डभैषज्यं गण्डस्फोटिकां (!) इत्यर्थः — sū. 21. गर्दभालुगण्डभैषज्यमुच्यते (!)। ... शान्त्युदकमभिमंत्र्य चतं प्रो-चति। ... आज्यं जुहोति। ततो मनसा संकल्पयति संपातान्ददाति। समाप्तं गर्दभदशजातिपिकादिचतगण्डभैषज्यं. — sū. 22. पापगृहीते जलोदरे च भैषज्यमुच्यते ... — sū. 26. विषे उपविषे स्थावरजङ्गमे च भैषज्यमुच्यते। मचिकायां च भैषज्यं ... — sū. 27. अथ कासे श्लेष्म-पतने च भैषज्यमुच्यते। ... भोजनमभिमंत्र्य ददाति। ... सक्तुगन्धम-भिमंत्र्य भचयति। ... उपस्थानमादित्यस्य। उदकमभिमंत्र्याचमयति ... — sū. 28. केशवृद्धिकरणे भैषज्यमुच्यते। ... काचोमाचोफलमणिं ... बध्नाति। जीवन्तीफलं बध्नाति। ... भृङ्गराजं ... बध्नाति। ... केशदृढीकरणे केशजनने ह्रस्वकेशेषु वृद्धकरणभैषज्यं। ... माषतिलादिकृष्णमन्नं भच-यित्वा। ... काचोमाचीफलं भृङ्गराजाभ्यां सहोदकमभिमंत्र्य रात्रौ ब्राह्मे मुहूर्ते ऽवसिञ्चति ... —

## Kaṇḍikā 32.

sū. 1. जम्भगृहीते भैषज्यमुच्यते। ... स्तनमभिमंत्र्य बालकाय प्रयच्छ-ति पानार्थं पतिः करोति कर्ता करोति। ... दुःखनाशने भैषज्यं. — sū. 2. .. पाययति बालकं पिता वा माता वा पाययति तत्रोपरि दुह्यते अभ्यवदुग्धाः. — sū. 3. सर्वव्याधिभैषज्यमुच्यते ... — sū. 5. वृश्चिकभैष-ज्यमुच्यते। तिरश्चिराजेरित्यष्टर्चेन (vii. 56. 1-8) ज्येष्ठीमधु (for यष्टि॰) पि-ष्टाभिमंत्र्य पाययति — sū. 6. चित्रमृत्तिकां जीवकोषणीचर्मवेष्टितां मणिं कृत्वा संपात्याभिमंत्र्य बध्नाति। ... वृश्चिकमशकभैषज्यं। जीवतः पशुचर्म जीवकोषणीत्युच्यते. — sū. 7. ... यानियानि पायनान्युक्तानि तानि तिरश्चिराजेरित्यस्य सूक्तस्य भवन्ति। समाप्तं वृश्चिकपिपीलिकामशकदं-शशाकोटजलूकाभैषज्यं (!). — sū. 8. अथ गण्डमालाभैषज्यमुच्यते। अप-चितां लोहिनीनामिति द्वाभ्यां (vii. 74. 1—2) आ सुस्रस इत्येका (vii. 76. 1) एताभिस्तिसृभिर्वंशधनुषं कृष्णोर्णमयीं ज्यां कृत्वा चिचितेन शरेण गण्डमालां विध्यति प्रत्यृचं। त्रयः शरा (Cod. शिरा) भवन्ति. — sū. 9. या ग्रैव्या अपचित इति चतुर्थ्या ऋचा चतुर्थेन शरेण गण्डमाला-मभिनिधाय विध्यति. — sū. 10. ... कृष्णोर्णज्यावज्वालितोदकम-भिमंत्र्य उषाकाले ... अवसिञ्चति व्याधितं. — sū. 11. अथ राजय-

च्छभैषज्यमुच्यते । . . . तृचेन वीणातन्त्रीखण्डं संपात्याभिमंत्र्य बध्नाति. — sū. 12 वाद्यवीणा तस्यां यत्स्वरं विष्णोवाद्यवीणाकंठं (!) शिखंडं वीणातन्त्रीं बद्धा संपात्याभिमंत्र्य बध्नाति(?). — sū. 13. . . . स्वयंपतितवीरिणखण्डयदमेकत्र बद्धा संपात्याभिमंत्र्य बध्नाति. — sū. 14. जलोदरे वरुणगृहीते भैषज्यमुच्यते . . . — sū. 17. अथ ज्वरभैषज्यमुच्यते । नमो रूरायेति सूक्तद्वयेन (vii. 116; vii. 117) खट्वायां व्याधितं कृत्वा . . . बद्धा तत अधः खट्वायां व्याधितमुपवेश्य तत उदकमभिमंत्र्य व्याधितमवसिञ्चति । व्याधितं सिच्यमानं यथा मण्डूकमभि सिच्यते तथा कुर्यात् . . . — sū. 18. अथ सर्वभैषज्यमुच्यते । . . . अर्थसूक्तेन व्याधितं... अभिमृशति. — sū. 20. सर्वविषभैषज्यमुच्यते . . . — sū. 21. इन्द्रस्य प्रथम इत्यर्थसूक्तेन पैद्वं कीटकं तालिखोति लोकप्रसिद्धा तं (Cod. ते) पिष्ट्वाभिमंत्र्य भक्षं ददाति . . दक्षिणनासिकापुटे. — sū. 22. अथ सर्पभये भैषज्यमुच्यते । . . . पैद्वं श्वेतवस्त्रवेष्टितमभिमंत्र्य यत्र सर्पभयं तत्र निखनति । पैद्वं हिरण्यवर्णसदृशः कोटश्चित्रितो वासपैद्व इत्युच्यते . . . — sū. 24. आरे अभूदित्यृचान्तेन (!x. 4. 26) उल्मुकं प्रताप्याभिमंत्र्य ततो विषव्रणं दृष्ट्वा तत्संमुखं क्षिपति. — sū. 25. सर्पादर्शने यतो दृष्टस्ततः (! for दृष्टस्ततो) प्रक्षिपत्युल्मुकं. — sū. 26. 27. अथानुक्तेषु कौशिकीयेषु सर्वव्याधिभैषज्येषु उक्तेषु चानुक्तेषु वा पठितेषु तत्र सर्वभैषज्यमुच्यते। सर्वव्याधिभैषज्येषु मन्त्र ओषधिवनस्पतीनामनुक्तान्यप्रतिपिद्धानि भैषज्यानां अंहोलिङ्गाभिरुच्यते अंहोलिङ्गेन गणेन तानि कर्तव्यानि । आशानामाशापालेभ्य इत्येका etc. . . Here follows the list of pratīkas given as the अंहोलिङ्गगण by the gaṇamālā, Ath. Pariç. 34. 31, and quoted above, p. 59, note 2; then the text continues as follows: यानि च वै प्रतीकान्युच्यन्ते तान्यभिमन्त्रणेन सर्वव्याधिभैषज्यानि भवन्ति तान्युच्यन्ते । अक्षिभ्यां ते (ii. 33. 1) मुञ्चामि त्वा (i. 10. 4) उत देवाः (iv. 13. 1) आवतस्त (v. 30. 1) शीर्षक्तिं (ix. 8. 1) अंहोलिङ्गगणः । एतैः पञ्चप्रतीकैः . . . अन्यतमेनैकेनाभिमन्त्रणं कुर्यादित्यर्थः ।. Then follows a list of many of the commoner practices described in the preceding kaṇḍikās of this adhyāya, all of which, if performed while reciting the अंहोलिङ्गगण, are accounted efficacious against all diseases (सर्वव्याधिषु भैषज्यानि), as though they were performed with their own proper mantras (अथवा तैः सूक्तैः कर्तव्यानि । अथवा अंहोलिङ्गेन कर्तव्यानि). Then follows a catalogue of the diseases, many of which are treated in the preceding kaṇḍikās: the others are known in the later medical çāstras: उक्तव्याधीनां परि-

गणनं क्रियते . . . — sū. 28. अथ स्त्रीकर्मणो विधिं वक्ष्यामः। पुत्रकामायै स्त्रीकामायै स्त्रियै मृतापत्यायै रजोनाशे च शान्तिरुच्यते... —

## Kaṇḍikā 33.

sū. 1. अथ प्रसवकाले इदं कर्म क्रियते यथा सुखेनैव प्रसवो भवतीत्यर्थः। अथ प्रसूतिकरणमुच्यते . . . — sū. 3. छिद्यमानासु मुञ्जेषीकासु गर्भसंस्थमरणं भवेत्। एकं कर्म. — sū. 5. शालाग्रन्थीन्विचृतति। द्वितीयं कर्म. — sū. 6. . . . कटिप्रदेशे बध्नाति . . . तृतीयं कर्म। केचिद्वषट् ते पूषन्निति सूक्तेन तैलसर्पिरभिमंत्र्य प्रसवकाले अभ्यञ्जनं कुर्वन्ति. — sū. 8. अन्या वो अन्यामवेति (!) ओषध्यस्ता एवं एकत्र बध्नाति. — sū. 9. सर्वत्रौषधिखननमेतेन विधानेन कर्तव्यं। यत्र क्वचिदोषधिखननं तत्र सर्वत्रानेन विधानेन कर्तव्यं. — sū. 18. यदि तान्येकत्र भवन्ति तदा पुत्रो जायते। विज्ञानकर्मेदं. — sū. 20. यदि पुंनामधेयं स्पृशन्ति तदा कुमारो जायते. —

## Kaṇḍikā 34.

sū. 1. अथ वन्ध्याप्रजननकरणमुच्यते . . . — sū. 2. ततो गृहे . . . पुरोडाशं प्रमन्दं कटुपा अलंकारान्संपात्य प्रयच्छति. — sū. 3. अथ मृतापत्यायाः स्त्रियस्तस्याः शान्तिरुच्यते। गर्भस्रावे जातमात्रे मृते वा स्त्रियां वा पुरुषे वा बाले वा युवाने (!) वा मृते इदं कर्म। त्रीणि मण्डपानि प्राग्द्वाराणि कृत्वा एकस्मिन्मण्डपे अभ्यातानान्तं कृत्वा . . . — sū. 4. पालाशपत्रे . . . — sū. 5. सीसेपूपरि स्त्रीमधिष्ठाप्य तेनोदपात्रेणाप्लावयति. — sū. 10. प्राकपश्चिमद्वारेषीकं (!) द्वार्योरुपरि बद्धा ततो निःसालामिति (ii. 14) सूक्तेनौदुम्बरीः समिध मृतापत्यायै आदधाति. — sū. 12. पतिलाभकर्माण्युच्यन्ते — sū. 13. . . . आशयति कुमारी. — sū. 14. मृगाखरमृत्तिकाया वेदिं कृत्वा . . . हिरण्यालंकारान्गुग्गुलमौषं च यथोक्तान्संपात्य बन्धनं धूपनं प्रलेपनं कुर्यात्। . . . पूर्वस्य संहिताविधिश्लोकः (cf. Ath. Paddh. and Keçava at Kāuç. 79. 9)।

आवपेत्सुरभिगन्धान् चीरे सर्पिस्तथोदके।
एतदायनमित्याङ्गरीचं तु मधुना सह ॥ —

sū. 15. . . . दक्षिणामुखी कुमारी प्रक्रामति. — sū. 16. . . . नावं संपात्य . . . भगस्य नावमित्यृचा उत्तारयति. — sū. 17. सप्तदानतंत्र्या वत्सान्बन्धयित्वा संपात्याभिमंत्र्य कुमारीं मोचयति। स्वयं न कर्ता। . . . यदि प्रदक्षिणं मोचयति तदा पतिलाभः. — sū. 18. . . . वृषभं . . .

विसर्जयति. — sū. 21. . . . आगमकृशरं . . . आशयति आज्यतन्त्रे भगिनीकं (!) — sū. 23. तत अर्यम्ण इत्यर्धर्चेन गृहाभ्यन्तरे कोणे वलिहरणं करोति. — sū. 24. यत आगच्छति काकस्तत आगच्छति वरः। समाप्तानि पतिलाभकर्माणि. —

Kaṇḍikā 35.

sū. 1. पुंसवनान्युच्यन्ते. — sū. 2. . . . नचत्रकल्पे उक्तानि पुंनचत्राणि. — sū. 3. . . . बाणं विवृहति। . . . शरमणिं संपात्याभिमंत्र्य बध्नाति. — sū. 4. . . . अध्यण्डे बृहतिपालाशविदार्यौ (!) वा एकत्र पिष्ट्वाभिमंत्र्य दक्षिणेनाङ्गुष्ठेन दक्षिणस्यां नासिकायां नस्तं ददाति। पुत्रार्थं कर्म पुंसवनमित्युच्यते. — sūs. 5. 6. Keçava's explanation is essentially the same as that of Ath. Paddh. and Daç. Kar. — sū. 7. के (!) लूनांश्च पलाशत्सर्वानिवर्तं (!) निघृष्य . . . शिश्ने आधाय ततो मैथुनं करोति। समाप्तं गर्भाधानं. — sūs. 8. 9. पुनः पुंसवनमुच्यते। . . . मधुमन्थेऽग्निं निचिप्याभिमंत्र्य पाययति स्त्रीं. — sū. 10. . . शमीगर्भाश्वत्थस्याग्निं कृष्णोर्णया वेष्टयित्वा संपात्याभिमंत्र्य बध्नाति आज्यतन्त्रे। समाप्तं पुनः पुंसवनं. . — sū. 11. अथ गर्भाधानमुच्यते। . . . हस्तावर्तकं कर्णादिकं (? Cod. कणा°) संपात्याभिमंत्र्य बध्नाति आज्यतन्त्रे। समाप्तं गर्भाधानं. — sū. 12. अथ गर्भदृंहणमुच्यते। . . . अच्युता द्यौरिति (see Kāuç. 98. 2, where the hymn is given in सकलपाठ) . . . — sū. 16. धाता दधात्विति चतसृभिर्गर्भिण्या (vii. 17. 1-4) उदरमभिमन्त्रयते। . . . वीरकर्म समाप्तं. — sū. 17. अथ प्रजननकर्म। प्रजापतिर्जनयतीति सूक्तेन (vii. 19) . . . — sū. 19. . . . ऽदकुलिजं संपातवन्तं कृत्वा गर्भिणीं परिहृत्य मध्ये निनयति। सुराकुलिजं etc. . . . भक्तं (!) सुरां प्रपां संपात्याभिमंत्र्य प्रजाकामायै प्रयच्छति। . . . समाप्तं प्रजागर्भकर्म वन्ध्यायाः. — sū. 20. अथ सीमन्तकर्म उच्यते। . . . श्वेतपीतसर्षपान्संपात्याभिमंत्र्य पुण्याहान्ते बध्नाति. — sū. 21. अथ स्त्रीवशीकरणमुच्यते। वृक्षत्वक्। तगरं। शरखण्डं (Cod. सराखंडं)। अञ्जनं। कुष्ठं। ज्येष्ठीमधु। वातसंभ्रमतृणानि। एतानि द्रव्याणि आज्येनालोड्य अङ्गं समालभेत् स्त्र्यर्थं. — sū. 22. . . . अङ्गुल्या तुदति भार्यामुदरे पृष्टौ स्त्र्यर्थी. — sū. 23 . . . एकविंशतिबदरीकण्टकानादधाति. — sū. 24. एकविंशतिबदरीप्रान्तानि सूत्रेण वेष्टयित्वा . . . — sū. 26. खट्वां अधोमुखपट्टिकां गृहीत्वा . . . स्वपिति। त्रिरात्रं कर्म. — sū. 27 (note 4). . . . हृदयं छेते. — sū. 28. . . . समाप्तानि संवननानि वशीकरणानि कामविषये स्त्रियामुत्साहो भवति . . . —

## Kaṇḍikā 36.

sū°. 1. 2. स्वापनविघ्नशमनं (Cod. स्वापनं)। स्त्रीस्वापनकर्म उच्यते। ...अभ्यन्तरद्वारे शेषमुदकं न्युब्जति. — sū. 4. ...स्त्रियाः खट्वाया दक्षिणपादमभिमन्त्रयते। ... खट्वाया रज्जुमभिमन्त्रयते। ... स्त्रीस्वापनं पुरुषस्य विषये काम उत्पद्यते कामविषये स्त्रीस्वापनं समाप्तं। लज्जाप्रच्छादनं लज्जा भवतीत्यर्थः। स्वापनं सर्वेषां मानुषाणां निद्राकामानां। मैथुनमाचरतो विघ्नं न भवति ... — sū°. 5. 6. अथ पलायिन्याः स्त्रियाः बन्धनकर्म तन्त्रक्रमेण क्रियते। रज्जु(!) कल्पते तद्रज्जुवेष्टनमुच्यते। अस्माद् दारस्यादिति द्वितीयेन सूक्तेन (vi. 77) रज्जुवेष्टनमभिमंत्र्य वंशाग्रे बद्धा मध्यमस्थूणे (Cod. स्थूरणे) बध्नाति. — sū. 7. ..शयनपादमभिमंत्र्य उत्पले बध्नाति. — sū. 9. ... अङ्कुशेन तिलाञ्जुहोति. — sū. 10. जायापत्योरक्रोधकरणमुच्यते ... — sū. 12. सौभाग्यकरणमुच्यते। ... शङ्खपुष्पीमूलमोषधि=त्खात्वा ... बध्नाति।... सौवर्चलपुष्पमभिमंत्र्य यस्य सौभाग्यमिच्छति तस्य पुष्पमभिमंत्र्य तस्य शिरसि बद्धा ...। सौवर्चलं सूर्यवेलेति प्रसिद्धा. — sūs. 13. 14. दुष्टस्त्रीवशीकरणमुच्यते। रथजितामिति सूक्तैस्त्रिभिर्माषानभिमंत्र्य स्त्रियाः क्रमेषु वपति। ... चणकान् ... वपति। खट्वास्थाने वा गृहे शयनदेशे वा ... शरभृष्टीरादीप्ता अभिमंत्र्य प्रतिदिशमभ्यस्यति। एषु पतिप्रतिकृतिं कृत्वा ... हृदये विध्यति दार्भ्यूषेण भाङ्गज्येन। ... समाप्तानि पतिद्वेषिणीकर्माणि। पुरुषो वा स्त्रीणां द्वेषं करोति। अनेन कर्मणा शान्तिर्भवति. — sū. 15. अथ स्त्रियो वा पुरुषस्य वा दौर्भाग्यकरणमुच्यते। ...दहनघातिता गौः अनुस्तरणीत्युच्यते। ईशानहता ज्वरहतेत्युच्यते।... तत उलूखलदरणे त्रिशिले निखनति तत उलूखले ददाति। उपरि यस्य दौर्भाग्यं क्रियते तस्य एतानि गृह्णीयात्. — sū. 16. स्त्रीपुष्पमालां... पिष्ट्वा अन्वाह. — sū. 17. ... कृष्णसूत्रेण वेष्टयित्वाभिमंत्र्य... व्यत्यासं अश्मानं (Cod. आश्मनं) शालाया उपरि ददाति। व्यत्यासेन निखनति दौर्भाग्यकर्म्मः. — sū. 18. अथ तस्याः सौभाग्यकरणमुच्यते। यं ते भगं निचख्नुरिति ... शिला उत्खनति उत्पादयति। भगमस्या इत्यनेन सूक्तेन यत्कृतं तदनया विनश्यति। समाप्तं यस्या दौर्भाग्यं कृतं तस्याः सौभाग्यकरणं. — sū. 19. अथ सपत्नीजयकर्माण्युच्यन्ते...। सपत्नीविद्वेषणं... बाणपर्णी मासिका लोके प्रसिद्धा ... — sū. 22. अथ स्त्रीविषये काम उत्पन्ने कामविनाशकान्युच्यन्ते। ... यस्मिन्देशे काम उत्पन्नस्तत्स्थानं यावत् स्त्री वा पुरुषो वा ... व्रजति. — sū. 25. स्त्रीविषये ईर्ष्याविनाशकान्युच्यन्ते। ... ईर्ष्यालुं दृष्ट्वा जपति। ... सक्तुमन्थमभिमंत्र्य ईर्ष्या-

लुकाय ददाति . . . भचार्थं . . . — sū. 26. . . . ईर्ष्यालुकस्य कटिप्रदेशे . . . खल्वामभिमंत्र्य (!) धमति. — sū. 28. अथ मन्युविनाशकान्युच्यन्ते स्त्रीविषये पुरुषस्य।. . . मन्युमन्तं पुरुषं दृष्ट्वाश्मानमभिमंत्र्य हस्तेन गृह्णाति. — sū. 29. . . . अश्मानं भूमौ निदधाति. — sū. 31. . . . मन्युमतः पुरुषस्य छायायां धनुरभिमंत्र्य सज्जं करोति . . . — sū. 32. अथ सर्वविषये मन्युविनाशकान्युच्यन्ते । . . . दर्भमूलमोषधिवत्खात्वा संपात्याभिमंत्र्य बध्नाति मन्युके. — sū. 33. अवीरजननमुच्यते । अपुत्रजननमित्यर्थः । अग्ने जातानित्यृचा अश्वतरीमूत्रेण पाषाणं निघृष्य ततोऽभिमंत्र्य भक्तेन सह ददाति। . . . अलंकारं समालभते। विद्वेषणं परस्य . . . । अथ वन्ध्याकरणमुच्यते। प्रान्यानिति तृचेन अश्वतरीमूत्रेण etc. — sū. 34. . . . समाप्तानि विद्वेषणानि परस्त्रीवन्ध्याकरणानि. — sū. 35. जारोच्चाटनमुच्यते . . . — sū. 37. . . . पाषाणमभिमंत्र्य जारमैथुनस्थाने प्रक्षिपति उच्चाटनार्थं. — sū. 38. पुरुषस्य स्त्रिया सह परस्परं विद्वेषणकरणान्युच्यन्ते। . . . वाणापर्णीं लोहिताजाया द्रप्सेन संनीयाभिमंत्र्य शयनमुपरि किरति (cf. sū. 19)। . . . स्त्रीपुरुषस्य उभयरुचिविनाशकरणं. — sū. 39. अथ दौर्भाग्यकरणमुच्यते। . . . हृदयं मुखं वाभिमन्त्रयते परस्त्रियै. — Keçava ends the adhyāya as follows: समाप्तानि स्त्रीकर्मकरणानि। तत्र भद्रश्लोकः।

भैषज्यकर्माणि प्रोक्तानि सर्वव्याध्युपशान्तये।
स्त्रीकर्माणि ततः पश्चाच्चतुर्थः संहिताविधौ ॥. —

## Adhyāya v.

### Kaṇḍikā 37.

Introduction. अथ विज्ञानकर्मणां विधिं वक्ष्यामः। लाभालाभजयपराजयसुखदुःखोत्कर्षापकर्षसुभिक्षदुर्भिक्षक्षेमाक्षेमभयाभयरोगारोगाः। असौ ऽस्तीति न वेति। धनाधनधर्माधर्म . . . मरणामरणं। धान्यं भविष्यति न वेति। क्षेत्रं भविष्यति न वेति। गृहे वासो भविष्यति न वेति। धान्यपुत्रपशुहिरण्यस्रग्वस्त्राणि च। विद्याशास्त्रादिलाभो भविष्यति न वेति। जीवितमरणे गमनागमने बलाबले। सदसद्योगाद्व्याधितस्य जीवितमरणाभ्यां। प्रसवे पुत्रयोगात् पुत्रे जाते धर्माधर्मसंयोगात् मित्रामित्रसंयोगात्। ग्रामो ऽस्ति वा न वेति। पुरुषस्य विवाहो ऽस्ति वा न वेति। संवत्सरे मासे वा भविष्यति सुभगा वा दुर्भगा वा। गृहं ग्रामादि भविष्यति न वा। आधानं भवेन्न वेति। इत्यादि मनसा वाचा वा संचिन्त्य तत्कर्म कुर्यात्. — sū. 1. . . . राध्यमानं क्षीरौदनमभिमंत्र्य तत

मासिञ्चेत् । मनसा चिन्तयेत् । वाचा चिन्तयेत् । ओदनं शृतं भवेदशृतं वा भवेत् । यदि यथाचिन्तितं भवति तदा तस्य कर्मसिद्धिर्भविष्यतीति जानीयात् ...। ...इध्ममुपसमाधायाभिमंत्र्य-आयाचेत् उत्कुचनेनार्थः। ...दर्भस्तम्बमभिमंत्र्य आयाचेत् यत्र समं विषमं नानार्थसिद्धिः। ...पूर्वेद्युः पाठामभिमंत्र्य आयाचेत्। पत्राणां पत्राणां संकोचनेनार्थसिद्धिः. — sū. 2. ममाग्ने वर्चो विहवेष्वस्त्विति सूक्तेन संग्रामे पूर्वेद्युर्वेदिं कृत्वा अभिमंत्र्य द्वितीये ऽहनि समविषमेण भावेन सिद्धिः . . . — sū. 3. . . पञ्चग्रन्थिवेणुदण्डमभिमंत्र्य आयाच्यं समे धारयति। अभीष्टदिशि पतनेनार्थसिद्धिः। . . . इषुं संधायाभिमन्त्र्यायाचेत् चिन्तितं (Cod. चिंतित) प्रक्षेपणेनार्थं। . . . कुम्भे उदकपूर्णे दुग्धं प्रक्षिप्यायाचेत् जनाधिकेनार्थसिद्धिः यथा चिन्तितं तथा सिद्धिः । कमण्डलुमुदकपूर्णं दुग्धमाक्षिप्याभिमंत्र्यायाचेत् जनाधिकेनार्थसिद्धिः। ... दर्भस्तम्बमभिमंत्र्यायाचेत् । . . . काम्पीलशाखां मूर्ध्नि धारयित्वाभिमंत्र्यायाचेत् इष्टदिक्पतनेनार्थः । . . . युगमभिमंत्र्यायाचेत् । . . . धान्यमभिमंत्र्यायाचेदग्नौ प्रक्षिपेत् प्रदक्षिणज्वलनेनार्थः । . . . हस्तयोरङ्गुलिद्वयमभिमंत्र्यायाचेत् । अज्ञातस्य वेनस्तदिति सूक्तेन एकविंशत्या (!) शर्करा अभिमंत्र्यायाचेत् धनेनार्थः समविषमभावेन यथावतार्थः (!). — sū. 4. अथ नष्टद्रव्यपरीक्षणे क्रियमाणे इद कर्म। . . . वेनस्तदिति सूक्तेन . . . — sū. 6. वेनस्तदिति सूक्तेनाहतेन वस्त्रेण वेष्टितं हलं संपात्याभिमंत्र्य येन हरेतां ततो नष्टः। . . . अश्वा(!) अश्ववत्कृत्वा संपात्य . . . येन हरेतां ततो नष्टः । समाप्तं नष्टद्रव्यपरीक्षणे विज्ञानं. — sū. 7. अथ कुमारीविज्ञानमुच्यते । ... वेनस्तदिति सूक्तेन ... — sū. 11. वेनस्तदिति सूक्तेन कुमारीमुदकाञ्जलिं पूरयित्वाभिमंत्र्य . . . — sū. 12. . . . समाप्तं कुमारी (!) विवाहकाले विज्ञानं. —

## Kaṇḍikā 38.

Introduction. अथ नैमित्तिकान्युच्यन्ते. — sū. 1. दुर्दिनविनाशकर्मणां विधिं वक्ष्यामः। ... दुर्दिनमभिमुखमुपतिष्ठते सर्वत्र दुर्दिनविनाशकानि. — sū. 2. ...प्रत्यक्षमुदकं प्रक्षिपति. — sū. 3. ...खड्गं गृहीत्वोपतिष्ठते अभिमुखः। ...उल्मुकं गृहीत्वोपतिष्ठते सूर्यस्याभिमुखः। ... मकुटं गृहीत्वोपतिष्ठते — sū. 4 ...उन्मृजानो अर्कमुखो भूत्वोपतिष्ठते. — sū. 6. पटेरकसमिध (!) अर्कसमिध आदधाति स्थण्डिले — sū. 7. ...खदां खात्वा खदां त्रिः परिक्रम्यार्कनिर्लुञ्चितं कृत्वा खदायां प्रक्षिपति सूक्तान्ते। ततः पांसुना खदां पूरयति। ... वृष्टिनिवारणं समाप्तं. —

22*

sū. 8. अग्निनिवारणं कर्म वक्ष्यामः। . . . अग्न्यभिमुखमुपतिष्ठते. — sū. 9. . . . एतत्कर्म चैत्रे। अग्निनिवारणं।

अतिवृष्टिरनावृष्टिः शलभा मूषकाः शुकाः।
स्वचक्रं परचक्रं वा सप्तैता ईतयः स्मृताः ॥. —

sū. 11. अवदीर्यमाणे ग्रामे वावसाने वाग्निशरणे वा सभायां (Cod. समव्यां) वा गृहे वा प्राकारे वा... वातरक्षार्थं कर्म वक्ष्यामः. — sū. 12. पत्तने रक्षार्थान्युच्यन्ते. — sūs. 13–16. The rites described in these sūtras are valid for the दृंहणानि as well as the दृतिकर्माणि. Is दृतिकर्माणि at Kāuç. 38. 12 to be emended to दृढिकर्माणि? In describing the latter Keçava ends as follows: समाप्तानि दृढकर्माणि...गृहपत्तने ग्रामपत्तने कार्यदृढकरणे अवहरणरक्षार्थं. — sū. 17. विवादे जयकर्मणां विधिं व्याख्यास्यामः। . . . ज्येष्ठीमधुमभिमंत्र्य (!) भक्षयति। ततः सभां प्रविशति अपराजितादेशात्। पर्यज्जयकर्म सभाजयकर्म समाप्तं. — sū. 18. विवादे जयकर्माण्युच्यन्ते। . . . पाटामूलं मुखे प्रक्षिप्य तदनन्तरमपराजिताद्देशादागच्छति. — sū. 19. पाटामूलं मुखे प्रक्षिप्यान्वाह. — sū. 20. ..पाटामूलं बध्नाति. — sū. 21. पाटापुष्पमालामभिमंत्र्य शिरसि धारयति। ...पाटापालाशीः सप्तपलाशी (!) सप्तपर्णी (!) मालामभिमंत्र्य धारयति. — sū. 22. वृष्टिनिवारणं भक्तभोजने कर्म उच्यते। ...भक्तमभिमंत्र्य भक्तं शाकादि (Cod. भक्त०) ततो भुञ्जीत। वृष्टिनिवारणं समाप्तं. — sū. 23. ब्रह्म जज्ञानमिति सूक्तेन प्रथमेन काण्डादिना सूक्तेन वेदं वा अनुवाकं वा सूक्तं वा कल्पं वा ब्राह्मणं वाध्ययनं कर्तुमिच्छति तदा तदा सूक्तं जपित्वा ततः अध्ययनं कुर्यात्। कलहशमनं समाप्तं. — sū. 24. ब्रह्म जज्ञानमिति सूक्तं जपति विवादे जयार्थं. — sū. 25. ब्रह्म जज्ञानमिति सूक्तं जपित्वा मीमांसव्याकरणादिशास्त्रवादं करोति तदा जपित्वा करोति प्रतिवादिनं जयति. — sū. 26. विवादकर्म उच्यते।... चाक्रिकस्य रज्जुमभिमंत्र्य धारयति हस्तेन... इति विवादकर्म कर्तुर्वदने कलहो न भवति. — sū. 27. सभाजयकर्माण्युच्यन्ते। सभास्तम्भनं कर्म जयकर्म तदा सभासदधर्माधिकरणादि जायते...। क्षीरौदनं etc. भक्षयति. — sū. 29. यद्वदामीति ऋचं जपित्वा सभां वदेत्। . . . निरीक्षते। . . . अन्वाह। यद्वदति तत्र तथैव वदति यच्चक्षुषा पश्यति तद्वदन् विघातो न भवति. —

Kaṇḍikā 39.

sū. 1. . . . तिलकमणिं संपात्याभिमंत्र्य पुण्याहान्ते बध्नाति। आत्मरक्षार्थमणिः। . . . सर्वत्र प्रत्यभिचरणार्थी मणिं बध्नाति . . . —

sūs. 5—12. ततः शान्त्युदकं करोति महाशान्तिधानं मातलीवर्जं कृत्वा दूष्या दूषिरसीति कृत्वा प्रतिहरणो गणः। ततो वास्तोष्पत्यमातृनामचातनशान्तिगणे (!) एते पञ्च गणाः (cf. Kāuç. 8. 23—9. 6) शान्त्युदकेन शावाप्यन्ते। ततो मातलीं कृत्वा शान्त्युदकभाजने चित्याद्या (cf. Kāuç. 8. 16) आदधाति। मन्त्रोक्तायां दर्भापामार्गसहदेवीआटरूषककाम्पीलशितोवारसदंपुष्पा एता मन्त्रोक्ता भाजने एता ओषधीः शान्त्युदके स्वधाय ततः शान्त्युदकं करोति (Kāuç. 9. 8)। तेन शान्त्युदकेन प्रोक्षयति... अतो रात्रौ इदं कर्म प्रमाणकं करोति। उपानहौ परिधाय उष्णीषं कृत्वा अग्रे भूत्वा कर्ता शान्त्युदकेन प्रोक्षति कृत्यास्थानं यावत् बालागमपात्रेषु कृत्यादिषु च सर्वेष्विदं कर्म भवति। अमित्रचक्षु (!) यदि कृत्या दुष्टा भवति ततो वक्ष्यमाणं कर्म करोति अथ न भवति तदा कुर्यात्। एवं बालागपात्रेषु कृत्यादिषु सर्वेष्विदं कर्म भवति। अमित्रचक्षुषा इत्यनेन मन्त्रेण कृत्यां (Cod. कृत्वा) निरीक्षते। स च निरीक्षते। कृतव्यधनि इत्यृचा कृत्यास्थानं अवेक्षते। कृतव्यधनि इत्यृचा कर्ता काण्डेन विध्यति आङ्गिरसकल्पविधानधनुषा। अथवा दर्भ्युषेण (!)... काण्डेन विध्यति. — sū. 15. मांसानि शकले निधाय कर्ता संदंशं गृहीत्वा चर्मणि बद्धा प्रेषकृत्यपरिक्रम्य बन्धान्मुञ्चति. — sū. 18. ... नवनीतेनाभ्यज्याक्षिणी वा अङ्क्ते. — sū. 20. ... अरण्ये गच्छन्ति. — sū. 27. ... वास्तोष्पत्यादयश्चत्वारो गणा (! cf. under sūs. 5—12) उच्चैः पठन्ति. — sū. 28. कर्ता अभिचारकृतपुरुषस्य शान्त्युदकेन मर्माणि (Cod. क॰) संप्रोक्षते। गार्हपत्यसभाग्रामपात्रकूपकुकुटइत्यादीनि (! cf. v. 31. 1—4) मर्माणि (Cod. क॰) संप्रोक्षति. — sū. 29. कृत्यास्थानं कृष्णवृषभहलेन कर्षति. —

## Kaṇḍikā 40.

sū. 1. अथ नदीप्रवाहविधिं वक्ष्यामः। नदीप्रवाहं खात्वा... प्रसिञ्चयति... — sū. 2. ... काशमभिमंत्र्य तत्र खाते रोपयति। ... दिविसेवालपर्णीमभिमंत्र्य (! for ॰शैवाल॰?) रोपयति नदीप्रवाहे।... वेधूकपाटरकं (for ॰पटेरकं?) अभिमंत्र्य नदीमार्गे निखनति। ...वेतसशाखामभिमंत्र्य नदीप्रवाहने (!) निखनति. — sū. 6. ...उदकं... मण्डूकस्योपरि निनयति. — sū. 7. पूर्वप्रवाहो न भवति अथ नवधा प्रवाहे इदं कर्म कुर्यात्। वरुणदेवतापाकयज्ञविधानेन आज्यभागान्तं कृत्वा यददः संप्रयतीरिति सूक्तेन निर्विभज्य जुहोति। तत उत्तरतन्त्रं। कृष्णव्रीहिं कृष्णाया गोः पयः घृतं च वेतसकाष्ठासु च इन्धनं। वेतसपत्रैः स्तरणं पटेरकेण वा अस्मिन्तन्त्रे(!) सर्वं मारुतं कर्तव्यं। उदकप्रवाहे उदकप्रवाहभये नदीभये ग्रामे नगरे

वा। यत्र उदकनदीभयं भवति तत्र सर्वत्र वारुणो होमः कर्तव्यः — sū. 9. . . . बलिं हरेत् ततः अति धन्वानीति द्वाभ्यां न भवति मन्त्रोदकं नदीप्रवाहे प्रसिद्धन्व्रजति। समाप्तं नदीदूरगमनकर्म — sū. 10. यदि न वहति नदी तदा वक्ष्यमाणमिदं कर्म। यददः संप्रयतीरिति नदीं हन्ति। ...वेतसशाखामभिमंत्र्य नदीमवसिञ्चति। ...यदि दूरं गता पुनः निवर्तते तदा इदं कर्म एके आचार्याः । यददः संप्रयतीरित्यादि सर्वमेकं कर्म मन्यन्ते। अन्ये भिन्नानि कर्माणि मन्यन्ते। अन्ये प्रसिद्धनकर्म हिरण्यमण्डूककर्म योगकर्म मन्थनकर्म पाणिकर्म एतेषां विकल्पं मन्यन्ते। समुच्चयो वा इति दारिलमतं समुच्चयः। समाप्तं अन्यप्रवाहे नदीकर्म — sūs. 11. 12. अथ अरणिसमारोपणकर्म। . . . अरणिद्वयं प्रतापयति पाणी वा प्रतापयति। उत्थाय वा गृह्णाति। ततो ऽनेन विधानेन पथि गच्छतां दोषो न भवति — sū. 13. अथावरोहणमुच्यते . . . — sūs. 14. 15. पुरुषस्य वीर्यकरणे विधिं वक्ष्यामः। कपिकच्छुमूलमोषधिवत्खात्वा . . . सुरवालकमोषधिवत्खात्वा . . . दुग्धे श्रपयित्वा उपविष्टं धनुरुत्सङ्गे कृत्वा . . . दुग्धमभिमंत्र्य पाययति — sū. 16. Keçava divides this sūtra in his treatment, so as to join the words मयूखे मुसले वासीनो to the preceding practice, to wit: यां त्वेत्यृचा सुरवालकं दुग्धे क्वाथयति पीत्वा कीलके उपविश्य . . . पिबति . . . कपिकच्छुं . . . मुसले उपविश्य . . . पिबति। . . . सूकरवालकं . . . मुसले उपविश्य . . . पिबति. Then a new practice is introduced with the words: शिश्नस्य स्थूलकरणमुच्यते, as follows: यथासित इति सूक्तेन एकशाखार्कमणिं संपात्याभिमंत्र्य अर्कसूत्रेण बध्नाति . . . — sūs. 17. 18. यावदङ्गीनमित्यृचा कृष्णमृगचर्ममणिं . . . बध्नाति। . . . आ वृषायस्वेति सूक्तेन हरिणस्कन्धचर्ममणिं कृत्वा कृष्णवालेन बध्नाति। ...वीर्यकरणं उत्थापनं स्थूलकरणं च भवति रेतोनाशे च. —

## Kaṇḍikā 41.

sū. 1. अथ वृष्टिकर्मविधिं वक्ष्यामः . . . — sūs. 2. 3. त्रयोदशेऽहनि पाकयज्ञिकं तन्त्रं व्रतोपायनान्तं कृत्वा ततो देवस्य त्वा सवितुरित्यादि मरुद्भ्यो जुष्टं निर्वपामि मरुद्भ्यस्त्वा जुष्टं प्रोक्षामीति अनेन यजुषा तावत्समानं यावदाज्यभागौ ततः चीरौदनं जुहोति । समुत्पतन्त्विति सूक्तेन पञ्चभिर्ऋग्भिरेकामाहुतिं ततः पञ्चभिर्ऋग्भिर्द्वितीयां षड्भिस्तृतीयामाहुतिं जुहोति।ततः पार्वणाद्युत्तरतन्त्रं। पाकयज्ञिकं तन्त्रमाज्यभागान्तं कृत्वा ततः प्र नभस्वेति चीरौदनं एकामाहुतिं जुहोति। न घ्रंस्तताप्त्यृचा

(vii. 18. 2) द्वितीयामाहुतिं। युक्ताभ्यां तृतीयामाहुतिं। पार्वणाद्युत्तरतन्त्रं बर्हिर्होमे मरुतो गच्छन्तु हविः स्वाहेति। सर्वेषु वृष्टिकर्मसु कृष्णाया गोराज्यं कृष्णाया गोः पयः कृष्णा व्रीहिशालयः वेतसस्रुवः वैतसी समिदिन्धनं च. — sūs. 3. 4. ... काशदिविधुवकवेतसामिकच (!) कृत्वा ... तत उदकमध्ये पात्रं अधोमुखं निनयति। ..उदके विस्रावयति. — sū. 6... कुक्कुरशिरमभिमंत्र्य उदके विस्रावयति। मेषशिरमभिमंत्र्य उदके प्रक्षिपति। ...मानुषकेशजरदुपानहौ (!) वंशाग्रे प्रबध्य योधयति जपन्. — sū. 8. अर्थोत्थापने विघ्नशमनविधिं वक्ष्यामः। ... अर्थकामोद्यमं यदा करोति तदा इदं करोति। ... द्रव्यहस्त्यश्वरत्नहिरण्यधनधान्यादि एवंकामो यदोद्यमं वणिजादि करोति तदा इदं कर्म करोति। यस्मिन्नारम्भा गृहादि न सिध्यन्ति तदा इदं कर्म ... — sū. 10. अथ द्यूतजयकर्म उच्यते ... — sū. 11. उत्तराषाढनक्षत्रे संमिनोति (Cod. संभि°) पूरयति. — sū. 13. ... त्रयोदशादयस्तिस्रो दधिमधुनि वासयित्वा (Kāuç. 7. 19) ... अक्षान्वा कपर्दकान्वा ... द्यूतं क्रीडां कुर्यात्. — sū. 14. अथार्थोत्थापनोद्यमकरविघ्नशमनकर्म उच्यते। ... मरुतो यजते पाकयज्ञविधानेन यथा वरुणं मारुतं चौरौदनं मारुतशृतमित्यादि भवति (cf. sū. 3 fg. These performances as well as those following now are performed with each of the pratikas mentioned in sū. 14)। एवमाद्या ओषधीः संपात्य अभिन्युन्नं। विस्रावयति। श्वशिर एडकशिरः केशजरदुपानहौ युद्धउदपात्रकर्म (cf. sū. 6) एतानि अभिवर्षणानि कर्माणि भवन्ति एकैकस्य सूक्तस्य। एके आचार्या मारुतस्थाने मन्त्रोक्तदेवतायागं कुर्यात् यथा वरुणं। अथौषधिहोमसमानं वर्षकर्मणाम्. ..। उदकधटं संपात्याभिमंत्र्य तत आस्रावयति। ... अवसिञ्चति (both performances are again prescribed with all the pratikas of sū. 14) ... विघ्नशमनकामः। समाप्तानि अभिवर्षणावसेचनानि कर्माणि. — sū. 15. वैश्वानरो रश्मिभिरिति सूक्तेन उदेहि वाजिन्निति विंशत्या ऋग्भिश्च (xiii. 1. 1—20) उद्यन्तमादित्यं स्नानं कृत्वोपतिष्ठते अर्थमुत्थापनकामः. — sū. 17. ... वस्त्रं ... ददाति। विद्रावणादिविषये शमनकामः। समाप्तानि विघ्नशमनकर्माणि. — sū. 18. अथ गोवत्सद्वेषोविरोधसांमनस्यमुच्यते. — sū. 19. ... ततो वत्सं त्रिः परिभ्रामयित्वा ... पानार्थं मुञ्चति. — sū. 20. ... गवां वत्सेन सह विरोधि वत्सगोविरोधिसांमनस्यकर्म (!)। समाप्तं गोवत्सस्य विरोधि सांमनस्यं। अकरणे गौः पूर्वा विनश्यति अथ गोवत्सः ... तदा राजा प्रजाः ... — sū. 21. अश्वशान्तिविधिं वक्ष्यामः। ... अश्वाः शान्तास्तेजस्विनो निरुपद्रवा वेगवन्त आरोग्या भवन्ति. —

Kaṇḍikā 42.

sū. 1. अथ प्रवासनद्रव्योत्थापनमुच्यते। ... प्रवासे गत्वा चौरभयं उदकभयं गमनविघ्नं न भवति। ... हविषामुपधानं कुर्यात्. — sū. 3. ... यदि यानेन याति तदा इदं कर्म. — sū. 4. वाणिजद्रव्यं वस्त्राश्वादि सर्वद्रव्यं ... विक्रयार्थं नयति। यदा द्रव्यं गृह्णाति तदा इदं कर्म ... — sū. 6. अथाभ्यागतपुरुषाणां सांमनस्यं क्रियते। यदा विशिष्टो गृहे आगच्छति तदा इदं मित्रीकर्म क्रियते। मित्रं तेषां दर्शने आगतानां। यदा गृहे आगच्छति तदा इदं कुर्यात् ... — sū. 7. ... हस्त्यादियानं संपात्याभिमंत्र्य तस्मिन्याने यस्य सांमनस्यं क्रियते ... उपरि उपविशन्ति। सर्वे यानस्योपरि चटन्ति ततः पश्चिमदिशि ... गत्वा पुनर्गृहे आगच्छन्ति। ततः ... ओदनमभिमंत्र्य सह भुञ्जन्ति मन्थं वा। समाप्तं सांमनस्यं। एकस्मिन्युद्धे क्रियमाणे सहागतस्य कर्म इदं कर्म अन्यस्य च साधारणमित्यर्थः। यो युद्धे साहाय्यत्वं करोति तस्येदं कर्म। प्रथमं पादौ प्रक्षाल्य ततः कर्म चेति। क्षत्रिययोरिदं कर्म मन्यन्ते केचित्. — sū. 8. अथ गृहे विरुद्धे सति सांमनस्यमुच्यते। कर्तारस्ते गत्वा समिधो गृहीत्वा तूष्णीं गृहमागत्य ... गृहमनुष्याणां सांमनस्यं भवति कलहनिवारणं ... — sū. 9. अथ मन्त्रब्राह्मणयोर्द्रव्यमिच्छति तस्येदं कर्म प्रतिगृहादि उच्यते। ... वेदपाठेन शास्त्रपाठेन अर्थोत्थापनमिच्छन्निदं करोति। समाप्तं वेदेन अर्थोत्थापने विघ्नशमनं. — sū. 12—17. अथ परिमोचविधिं वक्ष्यामः। गोदानिकतन्त्रमाज्यभागान्तं कृत्वा ततः शान्त्युदकं कृत्वाभिमन्त्रयते। अपो दिव्या इति चतसृभिः। ततोऽभ्यातानादि परिदानान्तं कृत्वा। केचित्परिदानान्ते ततोऽभ्यातानं हुत्वा। तत इदावत्सरायेति कल्पजैश्चतसृभिर्ऋग्भिराज्यं जुहुयात्। ... समिध आदधाति। ... वेदव्रतं कल्पव्रतं मृगारव्रतं विषासहिव्रतं यमव्रतं शिरोव्रतं अङ्गिरोव्रतं इत्येवमादिषु (cf. Kauç. 57. 32, note) ... इदावत्सरायेति व्रतविसर्जनं व्रतश्रावणं च करोति। ... यत्र क्वचिद्व्रतं वैदिकं लौकिकं च तत्र सर्वत्र व्रतादानं व्रतविसर्जनं च भवति विधानेन। शिरोव्रतादीनि नित्यानि ... कृच्छ्रचान्द्रायणादीनि काम्यानि स्मृतिपुराणशास्त्रवेदविहितानि ... तानि सर्वाणीत्येतेन विधानेन कर्तव्यानि. — sū. 18. परिमोचानन्तरं त्रिरात्रं स्नानव्रतं चरेत् ... — sū. 19. अथ पापलक्षणा स्त्री तस्याः शान्तिरुच्यते। ... स्त्रीमुखं प्रत्यृचं प्रक्षालयति तस्या मुखं हस्तयोर्मशकशियुकशिरकौ (!) अस्थानतिलकं ह्रस्वकेशादिपापलक्षणं सामुद्रिके स्त्रीलक्षणं व्याख्यातं। ... स्त्रियं पापलक्षणामभिषिञ्चति दक्षिणात्केशादारभ्य यावदुत्तरपार्श्वं ततः पापलक्षणं विनश्यति. — sū. 22. अथ पापदर्शने शा-

न्तिरुच्यते ... दर्शनदोषो न भवति। ... पुरुषस्य भाग्यकाले हरिणा यान्ति प्रदक्षिणाः अप्रदक्षिणेषु हरिणेषु अयं जपः पक्षिषु च। ... श्वानरुदिते काकरुदिते काकमैथुनेषु पुरुषस्य मैथुनेषु श्वेनमैथुनदर्शने नग्नस्त्रीदर्शने नग्नपुरुषस्य नपुंसकस्य दर्शने ... यत्र क्वचिदपशकुनाः पतिताः तत्र सर्वत्रायं जपः। श्रुतौ स्मृतौ पतिताः अदृष्टव्यास्तेषां सर्वेषां दर्शने अद्भुतानां दर्शनेष्वयं जपः कर्तव्यः। लोके यद्विरुद्धं अन्वीक्ष्यं ... अयं जपः। अपशकुनजपः समाप्तः. — sū. 23. अथ पुरुषद्रवे अकार्यकरणेन विघ्नशमनकर्म उच्यते ... —

Kandikā 43.

sū. 1. पुनर्विघ्नशमनमुच्यते। ... पिशङ्गवर्णसूत्रे बद्ध्वा ... अरलूमणिं संपात्याभिमंत्र्य बध्नाति। ... विस्कन्धविघ्नशमनो मणिः। स्पर्धमानस्य स्पर्धा विनश्यतीत्यर्थः। ... वेणुदण्डादीन्संपात्य ततः सूक्तेन विमृज्य धारयति ... । चित्रदण्डे ध्वजदण्डे चिह्नदण्डे ... लकुटादिदण्डं सर्वं संपात्य ... धारयति तस्य सर्पशृङ्गिदंष्ट्रादिविघ्नं न भवति। ...। आयुधं संपात्याभिमंत्र्य विमृज्य सूक्तेन धारयति। ... सर्वशस्त्रसंपातिते मायादिकं मायाजालयुद्धे निवारणं संग्रामे इन्द्रजालनिवारणं युद्धे विघ्नं न भवति शत्रुद्रवं निवारयति। शत्रवो गच्छन्ति। स्पर्धमानं शत्रुं जयति द्रवं विनाशयति. — sū. 2. ... विघ्नगृहीतं पुरुषं धूपयति ... यस्य आरम्भा न सिध्यन्ति. — sū. 3. अथ भूमिशुद्धिं गृहं करिष्यमाणस्तस्येदं करोति।. Then Keçava exhibits essentially the same text as the Ath. Paddh., ending with the following: अथवा नवे गृहे श्येनयागः कर्तव्यः विकल्प इति भाष्यकारः। प्रथमतो वा श्येनयागो नवे वा गृहे. — sū. 4. अथ गृहप्रवेश उच्यते। वास्तुसंस्कार उच्यते ... — sū. 5. ततः शान्त्युदकं करोति। मातलीं पूर्वं कृत्वा वास्तोष्पत्यादीनि चतुर्गणीं महाशान्तिं शान्त्युदके आवपते। ततो मातलीं कृत्वा ततः शान्त्युदकं समाप्यते (cf. Kāuç. 8. 23 fg.)। तेन भूमिं प्रोक्षयेत्. — sū. 7. ..अन्येषु स्थूणागर्तेषु पार्श्वे स्थितेषु प्रक्षिपति. — sū. 8. ... नीयमानां (!) शालामनुमंत्रयते. — sū. 11. ... दृढां कारयति शालाभूमिं. — sū. 13. ..द्वाभ्यां चरुं जुहोति। केचिदस्मिन्तन्त्रे (!) यजूंषि यज्ञ इति etc., as at Kāuç. 23. 1 fg. — sū. 15. वृद्धस्त्रियो गीतमङ्गल्यादि कुर्वन्ति ब्राह्मणाः पुण्याहानि पठन्ति श्राद्धं च केचित्पश्चात्कुर्वन्ति। ... यत्र गृहं मण्डपं वा कुटीं वा चित्रशालां वा मठस्थानं वा... देवगृहं वा अन्यं वा तृणमयं वा काष्ठमयं वा इष्टकामयं वा पाषाणमयं वा गृहादिकं करोति तत्रानेन विधानेन वास्तुयागः कर्तव्यः. — sū. 16. अथ क्रव्यादोपहतगृहे क्षेत्रे वान्यत्र गोष्ठे वा

यत्र क्वचित्तत्र शान्तिरुच्यते... क्रव्यादा प्रविष्टे गृहे कुमारा म्रियन्ते वत्सान् (!) वा किशोरान् (!) वा ... धननाशो यत्र भवति तद्गृहं ग्रामं नगरं वा क्रव्यादोपहतं जानीयात् ... — sū. 18. ... पालाशसमिध आदधाति. — sū. 19. ... कुमारवत्सगोमरणादि धनधान्यविनाशादि चिन्ततोद्वेगादि क्रव्यादचिह्नानि। क्रव्यादोपहतशान्तिः समाप्ता. — sū. 20. अथ क्रव्याच्छमनविधानमुच्यते। ... लौकिके वाग्नौ गृहे वावसथ्ये वा शान्तिकपौष्टिकार्थं मन्थने वा यत्र वा क्रव्यादोपहतिर्दृश्यते तत्र सर्वत्र कुर्यात्. — sū. 21. अथ वशाशमनविधानमुच्यते। ये अग्नय इति दशर्चेन सूक्तेन वशामभिमंत्र्य ततो ब्राह्मणाय ददाति। यस्य गृहे वशा भवति जायते तद्गृहं दैवहतं विजानीयात्. —

## Kaṇḍikā 44.

sū. 1. अथ वशाशमनविधानमुच्यते ... — sū. 3. ... शान्त्युदकं करोति अन्वारब्धायै वशायै काष्ठेन तृणेन वा. — sū. 5. मातञ्चन्तेन (xi. 6. 23) शान्त्युदकेनाचामयति च संप्रोक्षति च. — sū. 6. वशां कर्ता ऊर्ध्वस्थितः वास्तोष्पत्यादिचतुर्गणों महाशान्तिं (cf. Kāuç. 8. 23. fg.) उच्चैस्तृतीयसवने जपति वशामभिमुखः स्थितः. — sū. 14. समस्येति (!) मन्त्रेण भूमौ कृत्वा तत उपरि वशां पातयति. — sū. 15. ... निरुच्छ्वासं करोति मारयतीति. — sū. 17. यद्वशेत्यृचा कल्पजया आज्यं जुहोति. — sū. 19. ... इति कर्ता ब्रूयात्. — sū. 28. शेषमुदकं पार्श्वदेशे निक्षिप्य ततोऽभ्यन्तरे प्रविश्य... — sū. 36. छेदनस्थानमभिघार्य. —

## Kaṇḍikā 45.

sū. 3. अवदानानि पशोरेकादश गृह्णाति — sū. 4. ततः स्विष्टकृदवदानानि गृह्णाति तानि त्रीणि दक्षिणो बाहुः वामजङ्घा च अन्तर्विभागं। एतानि त्रीणि भागानि. — sū. 6. ततो यद्दैवत्यः पशुस्तद्देवत्यचरुः अर्पयितव्यः. — sū. 12. ... वपाश्रपण्यौ द्वे सह जुहोति. — sū. 13. अथ पित्र्येषु काम्येषु विशेषः... — sū. 16. सम्राडिति मन्त्रेणाज्यं जुहोति। सर्ववीरायेत्यादि चतस्र आहुतीर्जुहोति। ... समाप्तं वशाशमनविधानं। दैवहतं तस्य गृहं यस्य गृहे वशा जायते तस्य धनादिनाशा भवति तस्माच्छान्तिः कर्तव्या. — sū. 17. अथ दुष्टे प्रतिग्रहे सौम्ये वा कृते याजने वा दक्षिणाप्रतिग्रहणे येन कर्मणा पापं विनश्यति तदुच्यते। ... प्रतिग्रहं ... प्रतिगृह्णाति। प्रतिग्रहदोषो न भवति ... — sū. 18. सर्वाणि कर्माणि कृत्वा पुनर्मैत्विन्द्रियमित्यृचा कर्म समाप्य तत आत्मानमनुमन्त्रयते। सर्वकर्मसु भवति। इत्यात्मशान्तिः। संध्यावन्दने

आज्यतन्त्रे पाकतन्त्रे अस्मिन्कर्मणि नित्यनैमित्तिककाम्येषु पुनर्मैत्विन्द्रियमित्यृचा आत्महृदयमनुमन्त्रयति. — sū. 19. एतेन विधानेन पशवो व्याख्याताः... नित्यनैमित्तिककाम्याः...पैठीनसिना काम्याः पठिताः —

Kaṇḍikā 46.

sū. 1. अथ अकृते पापे लोके पापवचनमुत्पद्यते तत्र शान्तिरुच्यते। ...सक्तुमन्थं ... भक्तमभिमन्त्र्य ददाति। प्रथममग्रे कृत्वा अभ्याख्यातं गृहे प्रविश्य कर्ता पश्चात्प्रविशति. — sū. 2. ...द्रुघणमणिं संपात्याभिमन्त्र्य बध्नाति — sū. 3. ...पालाशकाष्ठमणिं द्रुघणप्रतिरूपं कृत्वा ... अभिशस्ते बध्नाति। कृष्णलोहमणिं ... ताम्रमयद्रुघणप्रतिरूपमणिं ...हिरण्यमणिं द्रुघणप्रतिरूपं ... बध्नाति। ... सर्वत्र कौशिके कर्मणा विकल्पः। एकस्मिन्विषये यत्र बहूनि कर्माणि पठितानि तत्रैकं कुर्यात्सर्वाणि वा तन्त्रविकल्पः. — sū. 4. अथ यागे क्रियमाणे येन कर्मणा विघ्नशमनं भवति तदुच्यते। ...ऋत्विजो यजमानश्चाश्नन्ति(!) अविघ्नेन यज्ञसिद्धिर्भवति. — sū. 5. यागसमाप्तौ विघ्नशमनमुच्यते। सोमदैवत्यं चरुं ... जुहोति. — sū. 6. अथ धनधान्यादिप्रतिग्रहादियाचनामिच्छन्निदं कृत्वा याचितविघातो न भवति। ...याचितं न प्रतिषेधयति। ... सारूपवत्सं पायसं संपात्याभिमन्त्र्याश्नाति. — sū. 7. अथ कपोते उलूके वा गृहं प्रविष्टे अन्यत्राभीष्टदेशे ऽपि तत्र शान्तिरुच्यते। ...शान्त्युदकं आवपते ततो मातली (xi. 6. 23) कृत्वा शान्त्युदकं समाप्यते रात्रौ तेन शान्त्युदकेन तत्स्थानं प्रोक्षति यताय इत्येतैर्मन्त्रैः (cf. Kauç. 39. 9) कपोतोलूकस्थानं यावत्...— sū. 8. ...त्रिः शालां परिणयति कपोतस्थानं वा परिभ्रामयेत् ...। आरण्यके पक्षिणि प्रविष्टे इदं कर्म कुर्यात्। कपोतोलूके वा प्रविष्टे द्विपद्चतुष्पद्विनाशो वेदे श्रूयते तस्य दोषशमनं ... — sū. 9. अथ स्वप्नाध्यायपठिते उग्रे स्वप्नदर्शने शान्तिरुच्यते। स्वप्नाध्यायपठितदुःष्वप्नं रुद्रभाष्यकारमतेन गृहीतव्यं(!)। पक्कमांसे प्रेतदर्शने परिष्वङ्गमर्कटे(!) दृष्ट्वा तैलाभ्यङ्गे नग्नपुरुषदर्शने नग्नस्त्रीदर्शने कालसूत्रेत्यादि(!) स्वप्नाध्यायपठिता अनेकशः। इति दुःस्वप्नदर्शने शान्तिरुच्यते। ... स्वप्नं कुत्सितं दृष्ट्वा मुखं प्रक्षालयति. — sū. 13. अथ पुनर्घोरदुःस्वप्ननाशनकर्म उच्यते। विद्म ते स्वप्नेत्येकेन पर्यायेण दुःस्वप्नं दृष्ट्वा मुखं विमार्ष्टि। ... पार्श्वेन द्वितीयेन भूयते। ... अन्नं स्वप्ने दृष्ट्वा निरीक्षते। ... मिश्रधान्यं पुरोडाशं जुहोति. — sū. 14. अथ आचार्ये मृते ब्रह्मचारी इदं करोति श्रेयस्कामः आचार्यदहने। अग्निर्भूम्यामित्यादि (xii. 1. 19) पञ्च सामिधेनीर्हुत्वा ततो दहनं त्रिर्भ्रामयित्वा तत नहि ते अग्ने तन्व इति सूक्तान्ते

पुरोडाशं जुहोति तस्मिन्दहने· — sū. 16. कौशिकसूत्रे शयनं न मन्यते च प्रेतादिभयात् तद्विघातशमनं· — sū. 17. अपो दिव्या इति चतसृभिर्ऋग्भिः स्नानं कृत्वा त्रिरात्रं गृहे आगत्य ततः शयीत इति कौशिकमतं। मृते आचार्ये इदं कर्म प्रायश्चित्तं कृत्वा ततः समावर्तनं कुर्यादित्यर्थः। अन्यं गुरुमुपासीत· — sū. 19. अथ ब्रह्मचारी स्त्रिया मैथुनसंयोगे इदं करोति। स अवकीर्णीत्युच्यते (Cod. सावº) तस्य प्रायश्चित्तमिदमुच्यते। ब्रह्मचारिणं दर्भरज्ज्वा कण्ठे बद्धा . . . — sū. 22. अथ स्वयंप्रज्वालिते ऽग्नौ प्रायश्चित्तमुच्यते . . . — sū. 23. अथ अग्निशब्दकरणे शान्तिरुच्यते। . . . अग्निमुपतिष्ठते — sū. 24. अथ संदेशे विस्मृते . . . अग्निमुपतिष्ठते। यदि ग्रामे वा गृहे वा संदेशं न कथयति तदा इदं प्रायश्चित्तं· — sū. 25. अथ पापनक्षत्रे जाते स्त्री वा पुरुषो वा यो जातस्तस्य शान्तिरुच्यते। . . . तस्य मुञ्जरज्ज्वा कण्ठे पादे . . . बद्धा ततः प्रतो हीति सूक्तेन उदकघटं संपात्याभिमंत्र्य दर्भपिञ्जूलीर्घटे प्रक्षिप्य ततो ऽभिषिञ्चति। . . . ग्रीवापाशं नदीफेनेषु निदधाति। नदीनां फेनानित्यर्धर्चेन (vi. 113. 2c) कटिपाशं उदकमध्ये प्रक्षिपति। मातृपितृभ्रातृषु दोषः श्रवणात्। तस्मात्पापनक्षत्रेण शान्तिः कर्तव्या। . . . मूलनक्षत्रे इदं कर्म क्रियते। यो नक्षत्रकल्पोक्तं कर्म कुर्यात् तदुच्यते। . . . प्रतो हीति सूक्तेन . . . क्षीरौदनं संपात्याभिमंत्र्याश्नाति। . . . एतस्मिन्तन्त्रे (!) समूलं बर्हि स्तृणाति समूलेध्मानुपसमाधाय एष विशेषः। नक्षत्रकल्पोक्तं। एषा नक्षत्रकल्पोक्ता शान्तिः। आप्लवनावसेचने च क्षीरौदनप्राशनं च एतानि त्रीणि। अथवा प्रतो हीति सूक्तेन उदकमभिमंत्र्य पापनक्षत्रजातमवसिञ्चति शिरसि। एतानि त्रीणि कर्माणि भवन्ति· — sū. 26. अथ ज्येष्ठे भ्रातरि जीवति विवाह आधानदीक्षां च करोति तस्य शान्तिरुच्यते . . . — sū. 28. उत्तरपाशं नदीनां फेनानित्यर्धर्चेन नदीफेने निदधाति। अधरपाशं . . . नदीमध्ये प्रक्षिपति। ततो बन्धनं कृत्वा ततो ऽवसिञ्चति· — sū. 29. . . . अपां सूक्तैर्घटं संपात्याभिमंत्र्य तत आप्लावयति। . . . अवसिञ्चति। परिवित्तिपरिवेत्तृप्रायश्चित्तं· — sū. 30. अथ मृते आचार्ये इदं कर्म . . . — sū. 33. अथ देवपितृवर्जितस्वदाशयनिहितस्य अन्नस्य याज्ञाकेन (! for याजकेन) येन कर्मणा भवति तदुच्यते। . . . अनुवाकेन स्वदाशयादन्नादुद्धृत्य सैतिकामेकां जुहोति· — sū. 34. . . . प्रायश्चित्त· — sū. 35. . . . स्वदाशयान्नसंस्कारशान्तिः समाप्ता· — sū. 36. अथ मृते धनिके ऋणकस्य ऋणदानशान्तिरुच्यते। अपमित्यमप्रतीत्तमिति त्रिभिः सूक्तैर्द्रव्यमभिमंत्र्य (vi. 117–119) पुत्राय ददाति। अनृणो भवति· — sū. 41. आकाशोदकेन शरीराप्लवने दोषो भवति तस्य शान्तिरुच्यते . . . — sū. 42.

दिवो नु मां बृहत इति सूक्तेन एकतैलं सर्वौषधिगन्धं हिरण्यं वा एतान्यभिमंत्र्य शरीरमुद्वर्तयेत्। . . . आकाशबिन्दुदोषोपशान्तिः समाप्ता — sū. 43. अथ कुमारस्य कुमार्या वा यस्योत्तमदन्तो पूर्वौ जातौ तत्र मातापित्रोर्मरणशङ्का भवति तत्र शान्तिरुच्यते . . . — sū. 44. . . . व्रीहियवतिलमाषानेकीकृत्याभिमंत्र्य उत्तमजातदन्ताभ्यां दंशयति. — sū. 47. अथ शिरसि अङ्गे वा काकोपविष्टदोषः श्रूयते तस्य शान्तिरुच्यते. — sū. 48. . . . उल्मुकमभिमंत्र्य काकमुखेन अपमृष्टं पुरुषं पर्यग्नि करोति। उपरि भ्रामयित्वा दूरे निक्षिपति. — sū. 49. अथ संसर्गदोषशान्तिरुच्यते।...सर्वेषु रोगेषु शावदन्तादि कुनखिना वण्डेन ज्वरेणापामार्गादिरोगेषु संसर्गेषु सर्वदोषान्मुच्यते . . . — sū. 50. अनृतमुक्त्वा आचमनं करोति। वणिजि अनृतं कृत्वा . . . दोषो न भवति. — sū. 51. यत्र क्वचित्खनति तत्र सर्वत्र यत्ते भूम इति . . . खननदोषो न भवति. — sū. 53. अथ शकुनशान्तिरुच्यते। . . . अपशब्दं श्रुत्वा . . . कपिञ्जलवाशितं श्रुत्वा ग्रामे अरण्ये पक्षिवाशितं श्रुत्वा वा स्वयं वा क्रुद्धभाषणं कृत्वा अन्यस्य वचनं श्रुत्वा . . . उलूकवाशने कपोतवाशने पूर्वतो वा उत्तरतो वा लोके निन्दितः। यत्किंचिल्लोके विरुद्धं दृष्ट्वा श्रुत्वा सर्वत्र जपने स्वस्त्ययनं भवति. — sū. 55. आकाशे यदि स्वपिति अरण्ये वा शून्ये गृहे वा पर्वते वा तदातदा यो अभ्य बभ्रूणा (!) इत्यृचं जपित्वा स्वपिति.— Keç. has the following at the end of the adhyaya: समाप्तानि नैमित्तिकानि सर्वज्ञानप्रबोधार्थं . . . दुष्टदोषविनाशनैमित्तिकानि। . . . नैमित्तिकान्यवश्यं कर्तव्यानि। अकरणे धनधान्यपश्वादिविनाशः . . . . जरायुज इति दुर्दिनमायन्नित्यादीनि (Kāuç. 38. 1. fg.) । अथाद्भुतानि वर्षे यक्षेष्वादिनैमित्तिकानि (Kāuç. 93. 1 fg.) तान्यवश्यं कार्याणि —

## Adhyāya vi.

### Kaṇḍikā 47.

Introduction. अथ क्रमप्राप्तो अथर्ववेदविहितो ऽभिचार उच्यते। मीमांसायामभिचारो निषिद्धः... मनुस्मृतौ च विहितो ऽभिचारः... — sū. 2. आङ्गिरसकल्पोक्ताः संभाराः प्रत्येतव्याः। दक्षिणस्यां दिशि मण्डपं कारयेत्तत्र यथोक्तविधिना गुरुः। पताकातोरणैर्युक्तं द्वारं . . . स्मृतं. — sū. 9. तथा तदग्न इत्यादि स्मर्तव्यं सर्वत्र। अभ्यातानान्ते दूष्या दूषिरसीति सूक्तेन तिलकमणिं संपात्याभिमंत्र्य बध्नाति कारयिता कर्ता सदस्यश्च (cf. Kāuç. 39. 1 fg.) . . . आत्मरक्षार्थं — sū. 12. अधुना दोक्षा उच्यते शुक्लपक्षे त्रयोदश्यां पूर्वाह्णे अभ्यातानान्तं कृत्वा द्यावापृ-

यिवो उर्वन्तरिचमिति सूक्तं कर्ता कनकरजतेति सूक्त(?) द्वाभ्यां सूक्ताभ्यां वेणुदण्डं छिनत्ति. — sūs. 14-16. य इमां देवो मेखलामिति पञ्चेति सूक्तेन (vi. 133; vi. 25) मेखलां संपात्य । अयं वज्र इति सूक्तेन दण्डं संपात्य । य इमासित्यृचेन मेखलां बध्नाति । वज्रो ऽसीति तृचेन सूक्तेन दण्डं गृह्णाति । नमो नमस्कृत्य इति सप्तर्षिभ्य उपस्थानं करोति शालाया बहिः । ततः शालां प्रविश्य व्रतादानीयाः समिध आदधाति शान्ताः । व्रतआचरणं तस्मिन्करोति । अभ्यातानाद्युत्तरतन्त्रं । दीक्षितस्त्रिरात्रमनशनं । त्रिरात्रे निवृत्ते कृष्णपक्षे प्रतिपदि कर्म भविष्यति — sū. 17. आङ्गिरसदण्डवृश्चनसूक्तं प्रतिपादन उक्तं गृहीत्वा मेखलाया ग्रन्थिमाक्लिम्पति आञ्जतास्यभिञ्जता इत्यृचा (vi. 133. 2). — sūs. 18-20. अयं वज्र इति तिसृभिर्ऋग्भिर्यद्यामि यन्निरामि इति द्वाभ्यामृग्भ्यां भोजनं करोति यत्पिबामीत्यृचा उदकं पिबति । अमुष्यस्थाने शत्रुनामग्रहणं — sū. 21. . . . फड्ढतो मऊमद इत्येतेन मन्त्रेण भोजनपात्रं भिनत्ति — sū. 22 इदमहं मऊमदस्य तुरुष्कस्य मूतिकर्णपुत्रस्य प्राणापानावपयच्छामीत्यनेन मन्त्रेण मेखलां ग्रन्थ्या बध्नाति गाढं करोति. — sūs. 25-27. द्यावापृथिवी उर्विति सूक्तेन पर्शुवृक्षपत्रं च गृहीत्वा शत्रोर्दक्षिणा धावतः पदं ऋजुं छिनत्ति । तिर्यग्नोनत्रिकोणे एकैकं एवमष्टावरान् सूक्तावृत्तिः. — sū. 28. तस्माच्छिदात्पांसुं च गृहीत्वा वधपत्रे (! for बधक°?) बद्धा . . . भ्राष्ट्रे न्यस्यति — sū. 30. अथवा एतत् . . . अभिचारतन्त्रमुच्यते । पश्चादग्नेः करिष्वां (!) कुशुपस्तीर्णायां etc. . . . — sū. 31. . . . उदकं हस्ते कृत्वा दक्षिणामुखः प्रक्षिपति — sū. 32. Keç. has nothing corresponding to this sūtra, but seems to connect directly with sū. 33. Later, however, after sū. 38, a passage corresponding to this sūtra appears, which contains nothing additional to the statement of Kāuçika. sū. 33. इदं च उष्णोदकं मध्ये अचितसक्तून् (!) प्रक्षिप्य पिबेत् अनालोडितानिकोच्छ्रासेन (अनालोडिता°, as though °नुपमथिता° stood in the text). — sūs. 34-36. त्रींस्त्रीन्मुष्टीं स्त्रिरात्रं द्वौद्वौ त्रिरात्रमेकैकं षड्रात्रे भुक्त्वा आञ्जतास्यभिञ्जतेत्येवमादि (vi. 133. 2) स्मर्तव्यं (cf. sū. 17). — sū. 37. . . . ब्राह्मणान्परिचारकांश्च . . . भोजयित्वा पात्रस्थमुच्छिष्टमेकधा कृत्वा . . . वऊमत्स्ये गर्ते प्रक्षिपेत्. — sū. 38. यदि ते धावन्तो दृश्यन्ते ततो द्वेष्यो मृतो जानीयात्. — sūs. 39-42. द्यावापृथिवी इति सूक्तेन लोहितशिरसं शकशमाशयित्वा (! for शशक°?) प्रेतवत्कृत्वाभिमंत्र्य दहति (? Cod. ददाति) । ततः अग्ने यत्ते तप इति पञ्चभिः (ii. 19-23) सूक्तैरुपतिष्ठते (cf. sū. 8) । अन्यः कर्ता अभ्यातानान्तं कृत्वा . .

कृकलासमष्टधा कृत्वा प्रत्यृचं जुहोति. — sū. 44 निवृत्य वेद्यामुपविश्य ... खेदात्ताः शरभृष्टीः प्रत्यृचं जुहोति. — sū. 45. ... शत्रुपदात्पांसुं गृहीत्वा पश्चादग्नेर्निधायं उदग्व्रजत्या खेदजननात् । निवृत्य खेदालंकृतान्पांसून् ... जुहोति. — sū. 46—52. कृकलासशरीरे शर्करानवधाय विषमवधाय ... बध्नाति पाशे स इति पादेन । आमुमित्यादत्ते । मर्मणि खादिरेण स्रुवेण गर्तं खनति अतोव य इति तत्र निदधाति. — sū. 53. संचित्य मृत्तिकोपरि निदधाति द्यावापृथिवी इति सूक्तेन जुहोति. — sū. 54. द्यावापृथिवी इति सूक्तेन आवलेखनीं हृदये विध्यति. — sū. 57. ... शत्रुमारणकामः.

Kandikā 48.

sū. 1. अश्वत्थ ... कृकलास ... एरण्ड ... श्लेष्मान्तक ... खदिर ... शरसमिध आदधाति. — sū. 3. ... स्रुवाग्रे दण्डं बध्नाति ... — sū. 4. ... शत्रुमर्मणि निखनति. — sū. 5. तौ अश्वत्थशाखायां ... प्रणुदति. — sū. 6. .. यावन्तः सपत्नास्तावन्तः (!) पाशान् ... उदके प्लावयति. — sū. 7. ... शत्रुं क्रोशन्तमन्वाह । मरणं भवति. — sū. 8. .. उपसमाधानं । ... स्रुवग्रहणं । ... जुहोति. — sū. 9. .. कृकलासकर्म शरभृष्टिकर्म सपत्नक्षयणीयकर्माणि षट् ग्राममित्य च कर्माणि षट् मणिकर्म पाशकर्माणि त्रीणि विकङ्कतस्रुवकर्म एकोनविंशति तन्त्राणि भवन्ति. — sū. 10. ... सर्पछत्रं चूर्णयति. — sū. 11. .. गोहरणेऽभिचारः. — sū. 12... चौरानन्वाह (Cod. चौरन्वाह). — sūs. 13–22. नैतां तेति सूक्ताभ्यां अमेण तपसेत्यनुवाकः सदा गोहरणमारणेषु ... क्रियमाणेषु ब्रह्मचारी जपति । श्मशाने जपति । ऊवध्ये श्मशानमवधाय (!) ततो परिखितः अमेण तपसेत्यनुवाकं जपति । द्वादशरात्रं यावत् अहरहः ततः ... मृतो द्वेष्य इति जानीयात् ... — sū. 23. .. श्वेतमृत्तिकामभिमंत्र्य शुने प्रयच्छति. — sū. 24. .. पलाशमणिं संपात्याभिमंत्र्य बध्नाति. — sū. 25. .. इङ्गिडं जुहोति. — sū. 27. इदं तद्युज इति चितान्यभिचारः. — sū. 28. इदं तद्युज इति सूक्तेन मध्यमपरिभवापर्णेन (!) फलीकरणाञ्जुहोति । यत्किं चासाविति सूक्तेन पञ्चर्चेन (vii. 70) मध्यमपलाशेन फलीकरणाञ्जुहोति. — sūs. 29–31. बर्हिर्लवनादिप्रतिष्ठापनान्तं कृत्वा तमग्निं स्फोटयति शर अन्यमग्निं प्रणयति । निरमुमिति सूक्तेन स्तरणं कृत्वा पुनर्मन्त्रेण स्तृणाति । निरमुमिति सूक्तेनाभ्यातानान्तं कृत्वा इङ्गिडं जुहोति. — sū. 32. .. वत्सखज्ञायां कृत्वा तस्य वृषणेरपिधाय्य वाधकेन काष्ठेन हन्यात् ... — sū. 35. .. शत्रुं दृष्ट्वा जपति. — sū. 37. .. विद्युद्धतवृक्षस्य समिध आदधाति. — sū. 38. .. ऊर्ध्वमु-

एकवृक्षसमिध आदधाति. — sūs. 41—43. असदन्गाव इति चारक्तो-शालिशकुनी (!) चीरौदनं पक्काभिमंत्र्य द्वेष्याय प्रयच्छति भक्षार्थं।... आमपात्रस्योपरि हस्तप्रचालनं करोति... —

## Kandikā 49.

sū. 1. द्वेष्याभिमुखं विसृजति वृषोत्सर्गवत् (cf. Kāuç. 24. 19 fg.). — sū. 2. .. आश्वत्थीः स्वयंपतिताः समिध आदधाति. — sūs. 3—27. The treatment of the remaining sūtras of this kaṇḍikā by Keçava differs so much from Kāuçika's, especially in the arrangement of the sūtras, as to render it impossible to present extracts sūtra by sūtra. The entire passage, barring irrelevant matter, is here given:
उदवज्राणां विधानमुच्यते। इन्द्रस्यौज इति दूर्वाभर्विघटं प्रक्षालयति। जिष्णवे योगायेत्युत्तराभर्वैः षडुदकांसघटानुदकसमीपे निदधाति। इदमहं यो मा प्राच्या दिश इति अष्टर्चेन कल्पजेन सूक्तेन उदकमध्ये निदधाति घटं। इदमहर्मिति घटेनोदके इदमहमिति सूक्तेन घटमध्ये मुखं करोति। इदमहं यो मा प्राच्या दिश इति सूक्तेन घटमुदकपूर्णं कृत्वा अपक्रामति। इदमहर्मिति सूक्तेन उदकपूर्णं घटं मण्डपे स्थापयति एतदभिचारे उदकाहरणम्। येन विधानेन वज्रप्रहरणं क्रियते तदुच्यते। इन्द्रस्यौज इत्यादि सर्वं कृत्वा। इदमहर्मिति स्थापनान्तं कृत्वा अग्नेर्भाग इत्याद्यष्टभिर्ऋग्भिर्द्विधाकरणं (v. 5. 7 fg.)। अर्धं (Cod. अर्धे) घटे कृत्वा अर्धं भाजने करोति भाजनमग्नौ तापयति। घटमन्यस्मै पुरुषाय प्रदाय अग्नेर्भाग इत्यष्टभिस्तापने मन्त्रः। बहिर्दक्षिणामुख उपविश्य भाजनमग्रे कृत्वा वातस्य रंहितस्य इति मन्त्रेण उदकं गृह्य। समग्नय इति सूक्तेन कल्पजेन सर्वेभ्यो भूतेभ्यो अभयवदनं (cf. sū. 12)। यो व आपो ऽपार्मिति etc. .. वज्रप्रक्षेपः। एतामनाधराच (!) पराच इति कल्पजया ऋचा (cf. sū. 6) भाजनमुदकं भूमौ निनयति। यं वयमिधि सूक्तेनैव अपामस्मै वज्र-मित्येकया एवमेव। इन्द्रस्यौज इत्यादि कर्तव्यं। तत्र रुद्रकृताः श्लोकाः।

प्रक्षालनं तथा योगो अप्सुपात् (!) निधापनं।
अपोहनमनेनैव तन्निवेद्य पात्रपूरणं ॥ १ ॥.

Here two more çlokas are given, which are however too corrupt for reproduction. Then the text continues as follows: विष्णोः क्रमो ऽसीति द्वादशभिः प्रत्यृचं विष्णुक्रमान्क्रमते (cf. sū. 14) शत्रोरभिमुखं। सववविधानेन (cf. Kāuç. 60. 1 fg.) बृहस्पतिशिर-श्चोदनं द्वेष्याय ददाति। ममाग्ने वर्च इति (cf. sū 15) सूक्तेन तं पृषातके-

नोपसिच्य तस्यौदनस्येत्यर्थसूक्तेनाभिमंत्र्य (xi. 3. 1) ददाति। सूक्तेनाभिमृते सति सूक्तेन संपातवन्तं करोति . . . । उदेहि etc. . . नावं . . . द्वेषत्सु (!) अन्वाह (cf. sū. 18) । समिद्धो etc. . . (cf. sū. 19) शङ्कुसहितान्पाशानभिमंत्र्य अरण्ये निदधाति । . . . द्वेष्यस्य पदं वृश्चति (cf. sū. 20) । पाशान् . . . अग्नौ ऽभ्यस्यति (cf. sū. 21) । . . . आमपात्रस्योपरि द्वेष्यस्य हस्तप्रक्षालनं करोति (cf. Kāuç. 48. 43) । . . . वृषभं संपात्य उत्सृजति शत्रुगृहानभिसृजति (cf. sū. 1) । रक्तशालिचीरौदनं संपात्याभिमंत्र्य द्वेष्याच ददाति (cf. sū. 22) । शत्रुप्रकृतिं च मृन्मयीं कृत्वा वेदिमध्ये ऊर्ध्वं स्थाणौ निबध्य . . . मूर्ध्नि संपातानानयति (cf. sū. 23) घृतेन पाचयति . . . । यस्मिन् षड्उर्वीः पञ्च इति उदवज्रान्प्रहरति उक्तेन विधानेन (sū. 24) । यो ऽन्नादो ऽन्नपतिरित्यृचा द्वेष्यं मनसा . . . आचामति स्वयं द्वेष्यस्य मरणं भवति (sū. 25) । यस्य गां पदा स्फुरति ऋग्द्वयाधिकारः तृचेन द्वेष्यं दृष्ट्वा अन्वाह (sū. 26) । . . . अवभृथे स्नात्वा निर्दुर्मण्य इति सर्वौषधिभिरात्मानमभिमृशति। अभिचारं कृत्वा इमां कर्ता शान्तिं करोति. — The following is an extract from a longer statement of Keçava at the end of this adhyāya: समाप्ता अभिचारपद्धतिः । मरणं बन्धनं वा प्रणिपातो वा उन्मत्तभावो वा भवति। . . . भद्रमतेन भाष्यकारदारिलमतेन च एभिः त्रिभिर्भाष्यकारैः (!) कौशिको विचारितः तस्य तस्य एते पदार्था भवन्ति । ... ततः श्लोकाः । मरणं व्यसनं चैव बन्धनं च विशेषतः । प्रणिपातोन्मत्तं वा दैवोपहतिरेव च । ... उपाध्यायकवीश्वरेण नाम्नातो ऽभिचारः कृतः । तुरुष्कसङ्गमदस्योपरि (Cod. रुरुष्क°) कारितः । पृथिव्यां दुष्ट उत्पन्नः सर्वदा च विनाशयेत् । अधर्मसंभवो दुष्टः प्रजाहिंसनतत्परः । तुरुष्कनाम्ना (Cod. रुरुष्क°) पापिष्ठा देवब्राह्मणहिंसकाः । पृथिव्यां श्रीभोजदेवधर्मसंरक्षणाय च। देशे तु मालवके उत्पन्नः श्रीराजगृहेषु च। ... —

## Adhyāya vii.

### Kandikā 50.

sū, 1. स्वस्त्ययनकर्मणां विधिं वक्ष्यामः । यदा ग्रामे गच्छति तदा आचमनं कृत्वा... प्रथमं दक्षिणेन पादेन प्रक्रामति अध्वानं. — sū. 2.. गृहे वा क्षेत्रे वान्यत्र वा प्रक्षिपति । ... यत्र क्षिपति तत्राविनाशो भवति द्विपदचतुष्पदादीनां स्वस्त्ययनं भवति. — sū. 3. ... दर्भादीनि तृणानि गृहे वा क्षेत्रे प्रक्षिपति । . . . इन्द्रमुपतिष्ठते . . . — sū. 4 . . . खड्गादिशस्त्रं संपात्य हस्तेन विमृज्याभिमंत्र्य धारयति। . . . रात्रे

प्रयच्छति। सुखं भवतीत्यर्थः — sū. 5. दिष्ट्या सुखं मीत्वा स्वपिति रात्रौ स्वस्त्ययनकामः। मध्यमाङ्गुल्याङ्गुष्ठाभ्यां प्रदेशन्यङ्गुष्ठाभ्यां। प्रादेशी दिष्टीरित्युच्यते (! for दिष्टिरि° ?). — sū. 6... प्रभाते निद्रां त्यक्त्वा...यदा उत्तिष्ठति तदा सूक्तं जपित्वा त्रीणि पदानि प्रक्रम्य तदा ... प्रयोजनार्थं गच्छति। ... गच्छतां स्वस्तिर्भवति. — sū. 7. सुप्त्वोत्थाय ... भूमौ तिस्रो दिष्टीर्मीत्वा ततो गच्छति प्रयोजनार्थं स्वस्त्ययनकामः। ... दिष्टीः प्रादेशमात्रीः — sūs. 8—9. अथाध्वाने (!) गच्छतां कर्म उच्यते। पथि गच्छन्तं संबलं (! for शम्बलं?) सक्त्वादि प्रेतं पादावित्यृचाभिमंत्र्य ब्राह्मणाय ददाति स्वस्त्ययनकामः. — sū. 10. उपस्थास्त इत्यृचा ओदनसक्तून् वटकादीनि त्रीणि द्रव्याण्यभिमंत्र्य भूमौ निक्षिपति। त्रीणित्रीणि प्रसृतिर्वा(!) अञ्जलीर्वा मुष्टीर्वा। पथि ततो गच्छति। स्वस्तिर्भवति सर्वस्य अनेन विधानेन। एतदध्वानकर्म (!) समाप्तं. — sū. 11. अथ सर्वार्थस्वस्त्ययनकर्म उच्यते। ... गृहे वा अथवा अरण्ये वा भये ... समुपस्थिते स्वस्त्ययनं नित्यं ... कुर्वीत. — sū. 12. वणिक्कर्म लाभार्थमुच्यते। ... उत्थापयति विक्रययोग्यत्वात्। ... लाभो भवति स्वस्तिर्भवति. — sū. 13. ये ऽस्यां प्राची दिगिति सूक्ताभ्यां etc. ... आज्यादि त्रयोदश द्रव्याणि भवन्ति (cf. the extract from Keçava at the end of the sixth kaṇḍikā) पालाशादयो द्वाविंशतिं वृक्षाणां समिध आदधाति (cf. Kāuç. 8. 15)। ... यत्र समिध आदधाति तत्र सर्वत्र एते समुच्चिता वा विकल्पिता वा भवन्ति. — sū. 14. भवाशर्वौ मृडतमिति सूक्तेन (xi. 2) .. चरुं जुहोति। ... रुद्रभूतप्रेतराक्षसलोकपालगृहदेवमहादेवगणाद्युपहताभिघाते (Cod. °देवगृह°) स्वस्त्ययनं। समाप्तं महादेवाभिघाते स्वस्त्ययनं. — sū. 15. अथ शीघ्रेण पुण्यमङ्गलकर्मकरणे स्वस्त्ययनमुच्यते। ... ब्राह्मणस्य शकृत्पिण्डान्पर्वस्वाधाय अग्रे भूत्वाभिमंत्र्य ततः प्रयच्छति ... किमवाहरिति पृच्छति. — sū. 16. स च शोभनमवाह: मङ्गलमवाहरिति ब्राह्मणो वदति। ... यदा शीघ्रे प्रयोजने कार्यं कर्तुमिच्छति तदा इदं कर्म कृत्वा ततः शान्तिकर्म करोति ... — sū. 17. अथ सर्पादिस्वस्त्ययनमुच्यते। सर्पवृश्चिकाद्विदंशकमशकभ्रमरभूमिकीटकृमयः। एतेषां भयं न भवति। ये ऽस्यां स्थेति सूक्तेन...प्राची दिगिति सूक्तेन (iii. 26; iii. 27: Keçava evidently construes the word युक्तयोः as दिग्युक्तयोः, contrary to the reading of all MSS.; cf. Kāuç. 14. 25; 50. 13) मा नो देवा इति सूक्तेन etc. ... सिकतामभिमंत्र्य शालां परितः किरति। ... शर्करामभिमंत्र्य शयने वा शालायां वा उर्वरायां वा गृहे वा वने वा ग्रामे वा तत्र परिकिरति (the emendation suggested in note 6, p. 146,

is thus rendered unnecessary, as Keçava's version of the passage seems a plausible one). — sū. 18. ये ऽस्यां स्थेति etc. (cf. Keç. at sū. 17) . . . तृणमालां युगच्छिद्रेण संपात्याभिमंत्र्य द्वारे बध्नाति . . . स्वस्त्ययनकामः । महानवम्यां दीपोत्सवे च शिष्टाचारः । . . . गजमार्गे बध्नाति . . . . महानवम्यामिदं जयकर्म । . . . तृणमालां युगच्छिद्रेण संपात्य पथि वा पत्तनद्वारे वा गृहद्वारे वा बध्नाति । . . . अहिभये वृश्चिकभये मशकभये भ्रमरसंघे कृमिभये . . . — sū. 19. ये ऽस्यां स्थेति etc. (cf. Keç. to sū. 17) . . . शुष्कगोमयमभिमंत्र्य गृहे विसृजति . . . स्तृणाति. — sū. 20. . . . गोमयमभिमंत्र्य पत्तनद्वारे गृहद्वारे . . . क्षेत्रे वा निखनति. — sū. 21. . . . गोमयं . . अग्नौ. — sū. 22. ये ऽस्यां स्थेति etc. (cf. Keç. to sū. 17) . . . अपामार्गमञ्जरीमभिमंत्र्य संभिनत्ति . . . गृहे स्तृणाति । . . . अपामार्गप्रसूनमभिमंत्र्य द्वारे निखनति । . . . अपामार्गमञ्जरीं निखनति ग्राममध्ये । . . . गुडूचीमभिमंत्र्य नाना करोति . . . गृहे स्तृणाति । गुडूचीपादानभिमंत्र्य निखनति । . . . गुडूचीपादानग्नौ जुहोति . . . (no mention is made of anything corresponding to the पराचीनमूलाम् of the sūtra) । . . समाप्तानि मशकादीनां स्वस्त्ययनानि. —

## Kaṇḍikā 51.

sū. 1. अथ व्याघ्रचौरवृकचरकसिंहारण्यकादीनां भये स्वस्त्ययनान्युच्यन्ते । . . . गां पृष्ठतो गच्छति । कीलकं निखनन्नुद्घाटयन् गृहादरण्यं गच्छति व्याघ्रादिस्वस्त्ययनकामः. — sū. 2. . . उदकघटमभिमंत्र्य गोमचारे (!) निनयति । ततः पांसुकूटं तन्त्रं कृत्वा अर्धं दक्षिणेन हस्तेन विक्षिपति । इन्द्राय पाकयज्ञविधानेन . . . — sū. 4. ये ऽस्यामिति सूक्तेन (iii. 26) प्रत्यृचमुपतिष्ठते. — sū. 5. मध्ये पञ्च (!) बलिहरणं — sū. 7. पर्वतदेवतायै अरण्ये पाकयज्ञविधानेनाज्यभागान्तं कृत्वा ब्रह्म जज्ञानमनाप्ता ये सहस्रधारेति सूक्तेन (v. 6. 3) जुहोति । हिमवते त्वा जुष्टं निर्वपामि हिमवते त्वा जुष्टं प्रोक्षामि हिमवन्तं गच्छतु हविः स्वाहेति निकटं पर्वतं यजते । भवाशर्वौ मृडतमित्यर्थसूक्तेन चरुं जुहोति . . . भवाय जुष्टं निर्वपामीत्यादि. — sū. 8. . . भवाशर्वादिभ्यो देवताभ्यो निर्वापं कृत्वा बृहद्भाण्डके श्रपणं । . . . एते सप्त पर्वतदेवताः । व्याघ्रचौरवृश्चिकहस्त्यारण्यकगर्वित्यादिभये स्वस्त्ययनं. — sū. 9. गोष्ठकर्म व्याख्यास्यामः । गोशान्तिः पाकयज्ञं तन्त्रं कृत्वा इन्द्रदेवतायै ब्रह्म जज्ञानमनाप्ता ये सहस्रधार इति सूक्तेन . . . भवाशर्वौ मृडतमिति सूक्तेन चरुं जुहो-

ति। . . . रुद्रदेवस्य चरोः हविरुच्छिष्टं यजमानो ऽश्नाति. — sū. 11. प्रथमप्रसवे गवां शान्तिरुच्यते। ब्रह्म जज्ञानं etc. . . . वत्सस्य वा वत्सिकाया वा मुखं स्रवति स्वस्त्ययनकामः. — sū. 13. . . . शाखामुदकमभिमंत्र्य गोभ्यो बहिरुदकधारां निनयति . . . — sū. 14. अथ पत्तनग्रामस्य गृहस्य शान्तिरुच्यते। . . . गृहकोणेषु निखनति चतुरः एकं मध्ये एकं गृहोपरि निदधाति. — sū. 15. अथात्र स्वस्त्ययनमुच्यते. — sū. 16. . . . त्रीणि सस्यवल्ली (!) अभिमंत्र्य क्षेत्रमध्ये निखनति। समाप्तमन्नव्याधिरक्षास्वस्त्ययनं. — sū. 17. अथ मूषकपतङ्गशलभहरिणरुरुशल्यादीनि (Cod. °रोरु°) सस्यविनाशकानि तेषां शान्तिरुच्यते। . . . अभिक्रामति मूषकादिस्थाने. — sū. 19. मूषकादिमुखं केशेन बन्धयित्वा... क्षेत्रमध्ये निखनति. — sū. 22. तस्मिन्नहनि मौनं कुर्यादस्तमयनं यावत्। . . समाप्तं मूषकशलभपतङ्गटिट्टिभकीटककोटिकाहरिणरुरुशल्यकगोधागोकृम्यादिस्वस्त्ययनं (Cod. °रोरु°). —

## Kaṇḍikā 52.

sū. 1. . . आज्यं जुहोति। . . . समिध आदधाति। पुरोडाशादि योज्यं सर्वत्र. — sū. 2. . . मन्थमभिमंत्र्य पथिकाय प्रयच्छति स्वस्त्ययनकामः। . . . भक्तमभिमंत्र्य भक्षयति . . . । समाप्ता ग्रासदूरगमनस्य शान्तिः। कलहदोषो न भवति. — sū. 3. पुरुषबन्धने मोचनशान्तिरुच्यते। . . . यस्मात्त इति चतुर्ऋचेन सूक्तेन येन बद्धः तत्सदृशं संपातवन्तं कृत्वा सूक्तसदृशं (! for मुक्त°?) द्वितीयं च संपातवन्तं करोति। यत्ते देवीति तृचेन सूक्तेन निगडयुगलद्वयं च संपातवन्तं करोति...। ...विषाणा पाशानिति चतुर्ऋचेन निगडयुगलद्वयं संपात्य एकमुक्त (!) निगडं चर्ममयं वा लोहमयं वा येन बद्धस्तन्मयं कृत्वा अभ्यातानाद्युत्तरतन्त्रं। समाप्तं बन्धनमोचनं. — sū. 4. वाचा बन्धनस्य मोचनमुच्यते। . . . भूमिलेखां संपात्य तत उत्तरतन्त्रं। समाप्तं बन्धनस्वस्त्ययनं बद्धो अनेन कर्मणा कृतेन मुच्यते बन्धनात्. — sū. 5. अग्निदावरक्षार्थमुच्यते। . . . उदकमभिमंत्र्य गर्ते प्रक्षिपति . . . उदकपूरणं करोति. — sū. 6. . . शालामध्ये द्वयो (!) उदकमभिमंत्र्य गर्ते प्रक्षिपति। अग्निरक्षा भवति. — sū. 7. . . अग्न्युपसर्गे एतत्कर्म. — sū. 8. आयन इति सूक्तेन दिव्यमभिमंत्र्य गृह्णाति दिव्ये शुध्यति तप्तमाषके (! for मोपके?) दिव्ये. — sū. 9. . . . अङ्गदग्धं उदकमभिमंत्र्य प्रक्षालयति। अङ्गमारोग्यं भवति अङ्गे अग्निरक्षा। समाप्तानि अग्निदाहरक्षाणि — sū. 10. नावा (!) पेटकपट्टिकादि स्वस्त्ययनार्थी-

दकतरणार्थरचा उच्यते। . . . नावादि अभिमंत्र्य ततश्चरन्ति उपविशन्ति। न कदा चिन्मज्जति क्वचित्। उदकरचार्थे दूरदेशगमने. — sū. 11. Keçava's treatment of the following passage renders it probable that it contains two sūtras, the division being after संपातवती, as follows: ...तृचेन नावं संपात्य। तत उत्तरतन्त्रं। समाप्तं दूरदेशगमने एतत्कर्म। ... तृचेन नौमणिं संपात्याभिमंत्र्य . . . नाविकेभ्यो बध्नाति। ये नावं चरन्ति तेषां बन्धनं. — sū. 12. अथ नष्टे द्रव्ये लाभकर्म उच्यते। . . . उत्थापयति नष्टनिरीक्षणार्थं. — sū. 14. . . . समाप्तं नष्टलाभकर्म. — sū. 15. नमस्कृत्य द्यावापृथिवीभ्यामित्येकां जपित्वार्थसूक्तं कुर्वीत स्वस्त्ययनकामः। केचित्स्वस्त्ययनकामोपस्थानं. — sū. 16. . . . सप्तप्रतीको अंहोलिङ्गगणः। एकैकस्य प्रतीकस्य होमः। त्रयोदशहविर्भिः प्रतीकविकल्पः। ...भोजनमभिमंत्र्य पाययति स्वस्त्ययनकामः। . . . भक्तं भक्षयति। . . . हविराज्यसमिधादि जुहोति। . . . आप्लवनावसेचनाचमनादीनि यथासंभवं कर्तव्यानि। पापसंसर्गे व्याधिसंसर्गे वर्णसंसर्गे अन्यस्मिन्नपि स्वस्त्ययनं। . . . अंहोलिङ्गेन विकल्पेन . . . हृदयमालभ्य जपं कृत्वा उपस्थानमादित्यस्य कुर्यात्। तेनैव सूक्तेन . . . अभिमर्शनं पुरुषस्य अन्यस्य वा . . . वृक्षगृहस्त्रीपुरुषादीनां स्वस्त्ययनं क्रियते। . . . अभिमर्शनं कृत्वा उपस्थानमादित्यस्य कुर्यात्. — sū. 17. . . . हविरभिमंत्र्य भक्षयति। . . . स्वयमभिमन्त्रणं करोति स्वयं हविषां भोजनमिति वचनात्। . . . यत्र क्वचिच्छान्तिः क्रियते तत्र सर्वत्र स्वस्त्ययनहोमं कुर्यात्। गृहे नगरे वा बहिर्वा पत्तने वा ग्रामे पुरे वा सर्वत्र . . .। समाप्तानि स्वस्त्ययनानि. — sū. 18. आयुष्यकर्मणां विधिं वक्ष्यामः. — sū. 19. . . . स्थालीपाकेन घृतपिण्डत्रयं कृत्वा संपात्याभिमंत्र्य घृतमश्नाति स्थालीपाकमश्नाति . . . — sūs. 20. 21. . . . हिरण्यमणिं युग्मकृष्णलं . . . त्रिगुणं कृत्वा संपात्याभिमंत्र्य बध्नाति। . . . स्थालीपाके स्थापयित्वा स्थालीपाकमश्नाति। ...केचित्स्थालीपाके संपातं न कुर्वन्ति। अथ क्रमेण यथा यौरित्यादि गोदानमध्ये पठितं प्रथमं व्याख्यायते।. Here follows an extended description of the performances indicated at Kāuç. 54. 11—12. —

## Kaṇḍikā 53.

sū. 1. अथ गोदानं संवत्सरे . . . यथा कुलधर्मेण वा कुर्यात्. — sū. 8. मातल्यन्तेन शान्त्युदकेन त्रिरेवापि etc. . . . — sū. 9. माणवकं . . . — sū. 13. . . . उत्तरसंपातान्दक्षिणतः सुहृदो हस्ते शकृत्पिण्डे आनयति. — sūs. 15. 16. उदपात्रे पोथिकां (! for पोतिकां) गुडूचीं च

प्रक्षिप्य ततः संपातः। शकृत्पिण्डे दूर्वां कृत्वा ततः संपातः। शान्त्युदकमुष्णोदकं चैकधाराभिः (!) समासिच्य. — sū. 18. अदितिः श्मश्रु इति ओदनं (in this form the word occurs several times in the expanded treatment of the following sūtras).

## Kaṇḍikā 54.

Introductory. अत्र ब्राह्मणवाचनं वृद्धस्त्रीभिर्गीतं च कारापयेत्(!).— sū. 1. अथ नापिताय प्रैषं ददाति . . . — sū. 3. . . क्षुरं मार्जयित्वा नापिताय प्रयच्छति पुनर्वपनार्थं — sū. 8. . . . वेद्युपरि प्रदक्षिणमग्निमनुपरिणीय. — sū. 9. . . . उपरितनं वस्त्रं गृह्णाति कर्ता — sū. 10. . . परिधानवस्त्रेण उपरि आच्छादयति माणवकं — sū. 11. यथा etc. . . . इत्यादि प्रथमतो व्याख्यानं कृत्वा (cf. Keç. at Kāuç. 52, 20, 21. where the subject matter of this sūtra is treated expansively) ततो गोदानं प्रारब्धं। आयुष्यमन्त्रा आयुष्यकर्ममध्ये पठिताः (cf. Keç. at Kāuç. 52. 18 fg.) -- sū. 12. . . आज्यं जुहोति। . . . समिध आदधाति . . . पालाशादयः। . . . पुरोडाशं . . . पयः . . . ओदनं . . . पायसं . . . पशुं जुहोति। . . . आवपति . . . — sū. 13. . . पितुर्मन्त्रः न मातुः — sū. 14. Keç. has at the end of this sūtra the परिदानानि, described in the same words as the Ath. Paddh. at Kāuç. 58. 17, note. Then: गोदानं समाप्तं। सप्तमे पञ्चमी कण्डिका (!). — sū. 15. अथ चूडाकरणमुच्यते। संवत्सरे द्विसंवत्सरे वा गोदाने कृते पश्चाच्चूडाकरणं कार्यं पूर्वतन्त्रं। शान्त्युदके तुभ्यमेवेति सूक्तमनुयोजयेत्। यत्र वपनं पठ्यते तत्र सर्वत्र गोदानविधानेन वपनं कुर्यादिति दारिलमतं . . . —

## Kaṇḍikā 55.

sū. 1. . . गर्भपञ्चमे गर्भाष्टमे। वर्षे कुर्यादिति पैठीनसिः। वसन्ते ब्राह्मणमुपनयीतेति च मीमांसायां। . . . शान्त्युदके आ यातु मित्र इति सूक्तमनुयोजयेत्। ततो ऽभ्यातानानि। ततः आ यातु मित्र इति (iii. 18) आयुर्दा इति (ii. 13) केचित् सूक्तेन मूर्ध्नि संपातानानयन्ति। दक्षिणे पाणौ अश्ममण्डलवर्जं शान्त्युदकमुष्णोदकं कृत्वा तस्मिन्नुदपात्रे संपातानानयति। उत्तरसंपातान् स्थालरूपे आनयति. — sū. 4. वपनं करोति सकृद्दक्षिणे पिञ्जूलीवर्जं। एवमुत्तरे शिरःपार्श्वे. — sū. 8. ब्रह्मचारी (!)ब्रवीति। आह ब्रूहि. — sū. 10. तत आचार्यो ब्रवीति को

नामासि किंगोत्रमिति (!)। पुनर्ब्रह्मचारी ब्रवीति सोमदेवदत्तशर्मनामाहं अमुकसगोत्रो ऽहं यथासंख्यप्रवरो ऽहं· — sū. 11. पुनर्ब्रह्मचारी ब्रवीति… — sū. 12. पुनराचार्य आह… — sū. 13. ..उदकाञ्जलिमादित्याय ददाति ब्रह्मचारी· — sū. 14. . . दक्षिणं पाणिं गृह्णाति आचार्यः· — sū. 14. . . आदित्यं निरीक्षते· — sū. 16. . . पूर्वाभिमुखं ब्रह्मचारिणमुपवेश्य . . . नाभिदेशं संस्पृश्य संस्तभ्य· — sū. 17. . . . गणं जपति आचार्यः· —

## Kaṇḍikā 56.

sū. 1. मेखलां प्रवरां चतुःप्रवरां वा . . . बध्नाति· — sū. 2. मित्रावरुणयोस्त्वेति अग्नेर्नो ऽसीति च सूक्तेन . . . ब्रह्मचारिणे प्रयच्छति· — sū. 3. . . . ब्रह्मचारी दण्डं गृह्णाति । पुनर्मैत्विन्द्रियमिति (vii. 67. 1) यज्ञोपवीतमभिमंत्र्य परिधत्ते मन्वादिविहितं । अहं रुद्रेभिरिति सूक्तं (iv. 30) प्रत्यृचं ब्रह्मचारिणं वाचयति· — sūs. 5-7. अथ व्रतग्रहणं करोति । ब्रह्मचारिव्रतं द्वादशवर्षिकं etc. (as in the other paddhatis) . . . यथास्मर्यमाणधर्मकं इत्याद्युक्तं आङ्गिरसकल्पे व्रतश्रावणं । अग्नये गुरवे च ब्रह्मचारिव्रतं निवेदयेत् । अग्ने व्रतपते इति प्रत्यृचं ब्रह्मचारी अष्टौ समिध आदधाति· — sū. 12. अथाचार्य आचारं कथयति ।· The treatment of this sūtra is identical with that of the Daç. Kar., ending.. मा यज्ञायं कुरु इत्येवमादि आचारान्कथयति· — sū. 13. अथैनं भूतेभ्य इत्यादिभिर्व्रीहियवशमीमभिमंत्र्य मूर्ध्नि दद्यात्· — sū. 16. . . ब्रह्मचारिणमात्मसंमुखं करोत्याचार्यः· — sū. 17. समिध आदधाति . . . । अभ्यातानानि हुत्वा वाताज्जात इति सूक्तेन (iv. 10) शङ्खमणिं संपात्याभिमंत्र्य बध्नाति । . . . उपनयनं समाप्तं· —

## Kaṇḍikā 57.

sū. 21. मय्यग्र इति पञ्चभिः पञ्च समिध आदधाति । उपनयनाग्नौ नष्टे इदं प्रायश्चित्तं। अनेने विधिना पुनाराधानं ब्रह्मचारी करोति। इति ब्रह्मचारी (!) अग्निपरिग्रहः । द्वादशरात्रं . . . सावित्रीव्रतस्य न ग्रहणं नो दीक्षणं भवति द्वादशरात्रं पयाशी (!) भवति। त्रयोदशे ऽहनि वेदव्रतं ददाति व्रतग्रहणं व्रतादानीयाः भवन्ति· — sū. 22. सायंप्रातरग्निकार्यमुच्यते etc. as in Daç. Kar. — sū. 31. अथ ब्रह्मचार्युपनयनानन्तरं मेधाजननमन्त्रैरायुष्यमन्त्रैश्चाज्यं जुहुयात् । ये त्रिषप्ता अहं रुद्रेभिस्त्वं नो मेधे वोच्य म इति (cf. Kāuç. 10. 1, 16, 20) । . . . मेधा संपद्यते . . . —

Kandikā 58.

sūs. 1. 2. . . कर्णे क्रोशन्तमनुमन्त्रयते। अक्षि स्फुरन्तमनुमन्त्रयते(!)। दुःस्वप्नदर्शने स्वस्ति अनिष्टदर्शने च अद्भुतदर्शने च . . — sū. 3. पुरुषशरीरमनुमन्त्रयते आयुष्कामः. — sū. 4. ब्राह्मणोक्तमुच्यते। सप्त ब्राह्मणानभीष्टान्नभोजनं कारापयित्वा(!) एकः प्राङ्मुख एको दक्षिणामुखः चत्वार उदङ्मुखाः सर्वे उत देवा इति सूक्तेनाभिमृशन्ति पुरुषस्य शरीरं। समाप्तं ब्राह्मणोक्तमायुष्कामस्य। ऋषिहस्त उच्यते। अन्तकाय मृत्यव इति सूक्तेन नाभेरूर्ध्वमधस्तादभिमन्त्रयते। द्विः सूक्तावृत्तिः। आ रभस्वेति हृदयमभिमन्त्रयते। आवतस्त ब्राह्मणाय नम इति सूक्ताभ्यां दक्षिणकर्णमनुमन्त्रयते। समाप्त ऋषिहस्तः For the mantras cf. sūtra 3. — sū. 5. आयुष्कामस्य कर्मणि वामिति हस्तौ प्रक्षाल्य वि देवा इति etc. (cf. sū. 3) अभिमन्त्रयते. — sūs. 6. 7. . . आत्मानमनुमन्त्रयते . . . आयुष्कामः — sū. 8. . . आयुष्कामः। रक्षार्थे युद्धे। नाशनं नैनं प्राप्नोति न शपथो न कृत्या नाभिशोचनं. — sū. 9. . . आयुष्कामः रक्षार्थी उपनयने नित्यं बन्धनं. — sū. 10. . . सूक्तेन सुवर्णरजतलोहं त्रीणि शकलान्येकत्र कृत्वा नवशालाकं मणिं त्रिवृतं कृत्वा संपात्याभिमंत्र्य बध्नाति. — sū. 11. . . आयुष्कामः . . . आरोग्यकामः . . . रक्षाकामः . . . बालशरीरमनुमन्त्रयते. — sū. 12. . . . अनुलोमं प्रलिम्पति (the reading ऽप्रतीहारं in the text of the sūtra is therefore correct) । . . . यो विकलेन्द्रियस्तस्येदं कर्म. — sū. 13. The introduction is in essential agreement with that of the Ath. Paddh. and Daç. Kar. — sū. 16. . . . पाययति। ततः पिता नाम करोति। अथ आचार्यो वा दक्षिणे कर्णे श्रावयति। . . . नक्षत्रकल्पोक्तं नाम द्व्यक्षरं चतुरक्षरमित्यादि. — sū. 17. . . प्रच्छादयति। शिवे ते स्तामित्यादि परिदानानि सिंहावलोकनन्यायेन गोदानमध्ये उक्तानि। अभ्यातानाद्युत्तरतन्त्रं। ततः श्राद्धं। नामकरणं समाप्तं. — sū. 18 . . . चतुर्थे मासि . . . पुण्याहान्ते निष्क्रामयति। . . . ततः पूर्वोक्तानि परिदानानि ददाति . . . श्राद्धं च. — sū. 19. अथान्नप्राशनं। षष्ठे मासि प्राशनं कुर्यादिति पैठीनसिः सर्वस्यां स्मृतौ। पञ्चमे कुमार्या इति. Then essentially in the same strain as the other paddhatis. — sūs. 20. 21. . . . गोदानवत्परिदानानि ददाति। नामकरणे निष्क्रमणे अन्नप्राशने च गोदानिकानि परिदानानि भवन्ति। इत्यन्नप्राशनं समाप्तं। उक्तो वातिरिक्तो वा यः स्वशाखोदितो विधिः तेनैव सर्वं परिपूर्णं न कुर्यात्पारतन्त्रिकं पश्चाच्छ्राद्धं सर्वेषु संस्कारेषु कुर्यादिति दारिलभाष्यकारस्याभिप्रायेण व्याख्यायत इति। श्राद्धं कृत्वा पश्चात्कर्मेति रुद्रभद्रौ . . . —

